# पाठानुक्रमणिका

## ईशस्तवः

त्वं वै सर्वचराचरं सृजसि भोः,
त्वं प्रासि सर्वं जगत् ।
त्वं वै संहरसि प्रपञ्चमखिलं
तस्य त्वमेकाश्रयः ।
त्वं वै स्थावरजङ्गमं जगदिदं
प्रेम्णानुगृह्णासि भोः ।
त्वं सर्वस्य निदानमीश, जगतः
तस्मै नमस्ते प्रभो ॥

२

त्वं ब्रह्माखिललोकसृष्टिनिपुणः
त्वं विष्णुरस्याविता,

त्वं रुद्रोऽसि समस्तलोकहरणः

त्वं वै महेशोऽप्यसि ।

त्वं साक्षाद्धि सदाशिवो गणपतिः

बाधाहरश्शङ्करः,

त्वं सर्वस्य निदानमीश, जगतः

तस्मै नमस्ते प्रभो ॥

३

किं वै किं नु करोमि, कं नु शरणं

यामि, व्रजामि क्व वा,

कं पश्यामि, कमालपामि, कतमं

पृच्छामि, यच्छामि किम् ।

गत्वा कुत्र, कमत्र वा प्रतिदिनं

नत्वा विदित्वाथ किं,

कृत्वा किं हि विभो तवेश, वरदं

प्राप्नोमि पादाम्बुजम् ॥

❀ ❀ ❀

## ज्ञानाम्बाया बुद्धिमत्त्वम्

व्युत्पन्नबुद्धयो बालास्तुल्यं वाञ्छन्ति वल्लभम् ।
त्यागराजकवेः पुत्री ज्ञानाम्बा धीमती यथा ॥ १ ॥

विरञ्चिपुरे त्यागराज इति कोऽपि कविरभूत् । तस्य कमलाम्बा नाम भार्या ज्ञानाम्बा नाम च तनया । ज्ञानाम्बा काव्येषु भृशं व्युत्पन्नासीत् शब्दशास्त्रे च निपुणा । तदा सुन्दरेशो नाम छात्रस्तत्पितुः सकाशे काव्यं पठति-स्म । सा च तस्मै पत्नीत्वेन दातव्येति तत्पित्रोः संकल्पः । तादृशं तयोः संकल्पं ज्ञात्वा धीमती सा क्वचिद् दिवसे सुन्दरेशे काव्यं पठति स्वयमपि पितुः पार्श्वे समुपविश्य शृण्वत्यासीत् । तदा—

विहस्य सुमुखी प्रोह विजने प्राणवल्लभम् ।
त्वां विहाय कथं गच्छाम्यहमेकाकिनी नदीम् ॥ २ ॥

इति श्लोकं पठित्वा सुन्दरेशो 'विहस्य'–इति पदं षष्ठ्यन्तं, 'विहाय'–इति चतुर्थ्यन्तम्, 'अहं' 'कथम्' इतिच पदे द्वितीयान्ते प्रोवाच। व्युत्पन्ना बुद्धिमती च ज्ञानाम्बा तच्छ्रुत्वा पितरं प्राह तात—

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ।
अहं कथं द्वितीया स्यात् द्वितीया स्यामहं कथम्॥ ३ ॥

अथ पण्डितः स्वपुत्रीबुद्धिकौशलं सुन्दरेशस्य बुद्धि-मान्द्यं च पर्य्यालोच्य 'विवाहश्च विवादश्च समयोरेव शोभते'–इति न्यायमनुसृत्य पूर्वकृतं संकल्पं निरस्यान्यस्मै सरूपाय वराय कन्यां प्रददौ ।

❀ ❀

## बधिर-कथा

परोक्तं साध्वनाकर्ण्य न युक्तं प्रतिभाषितुम् ।
वहिर्निष्कासितः कोऽपि बधिरः प्रतिकूलवाक् ।।

कोऽपि बधिरः स्वमित्रं ज्वरार्तं श्रुत्वा तं द्रष्टुमिच्छन् गृहात् प्रस्थितः । पथि गच्छन्नेवमचिन्तयत्—मित्रसकाशं गत्वा 'अपि सह्यो ज्वरवेगः ?'-इति पृच्छेयम् ।

'किञ्चिदिव ह्यः ।' इति स प्रतिवदेत् ।

ततः 'किमौषधं सेवसे ?' इति पृच्छेयम् ।

'इदमौषधं सेवे ।' इति स प्रतिभाषेत ।

अनन्तरं 'कस्ते चिकित्सकः ?' इति मया प्रष्टव्यम् ।

'असौ मम चिकित्सकः ।' इति स प्रतिब्रूयात् ।

अथ तत्तदनुरूपं संभाष्य मित्रमापृच्छ्य गृहमागमिष्यामि ।

एवं चिन्तयन् मित्रं प्राप्य सादरमपृच्छत्—

मित्र ! अपि सह्यो ज्वरवेगः ?

'तथैव वर्तते ।' इति स प्रत्यवदत् ।

बधिरः—भगवतः प्रसादेन तथैव वर्तताम् । कीदृश-मौषधं सेवसे ?

ज्वरार्तः—'ममौषधं मृत्तिकैव ।' इत्युवाच ।

बधिरः—तदेव भद्रतरम् । कस्ते चिकित्सकः ?

ज्वरार्तः ( सकोपम् ) मम वैद्यो यमराजः ।

बधिरः—स एव समर्थः । तं मा परित्यजत ।

एवं प्रतिकूलानि वचनानि श्रुत्वा स रोगी दुःसहेन कोपेन समाविष्टः परिजनमादिशत्—'भोः । क्रिमयमेवं चते क्षारं प्रक्षिपति । निष्कास्यतामयमर्धचन्द्रदानेन ।'

अथ स मूढः परिजनेन गलहस्तिकया बहिर्निस्सारितः ॥

❀ ❀ ❀

## भारत-गीतिका

१

अलं भारतीया मतानां विभेदै-
रलं देशभेदेन वैरेण चालम् ।
अयं शाश्वतो धर्म एको धरायां
न संभाव्यते धर्मतत्त्वेषु भेदः ॥

२

दया भूतसङ्घे, मतिर्देवदेवे,
चतुर्वर्गचिन्ता, विरोधाद् विरामः ।
मनःकायवाक्शोधने चैव बुद्धिः
परं धर्मतत्त्वं विरोधोऽत्र केषाम् ?

३

नराः सर्व एकैकमीशं भजन्ते,
स ईशः परं नामभेदेन भिन्नः ।
समुल्लासितो धर्म एतेन चैको
विचिन्त्येति को वर्तता भेदवादे ?

४

कलिङ्गाङ्गवङ्गान्ध्रकद्राविडादी-
नुपाधीन् विहायैक्यमालम्ब्य भूयः ।
अये भारतीयाः, पुरेवात्मरूपं
लभध्वं, यशश्चन्द्रशुभ्रं तनुध्वम् ॥

❀ ❀ ❀

## अशोकः

क्रिस्तोः पूर्वं ( २७२ ) द्वासप्तत्युत्तरद्विशततमवर्षादारभ्य ( २३२ ) द्वात्रिंशदुत्तरद्विशततमवर्षपर्यन्तमशोको नाम बुद्धमतावलम्बी महाराजो भारतवर्षस्याधिपत्यमवहत्। स खलु चन्द्रगुप्तमौर्यस्य पौत्रो बिन्दुसारस्य पुत्रश्चासीत्। स एवाशोकवर्धन इत्यपि समाख्यायते। स चेक्ष्वाकुवंशीयः श्रीराम इव प्रजानामैहिकमामुष्मिकं च योगक्षेमं व्यचिन्तयत्।

प्रथमतस्तावदशोकः समरप्रियोऽवर्तत। महदपि स्वीयं राज्यं कलिङ्गदेशस्य विजयेन महत्तरं कर्तुं मतिं बबन्ध। सन्नद्धसहायश्च राज्यावाप्तेः परं द्वादशे वर्षे कलिङ्गानभ्ययुङ्क्त। प्रवृत्तश्च तत्र कलिङ्गाशोकसैन्ययोस्त्रैवार्षिको दारुणः

सङ्ग्रामः। तृतीयस्याब्दस्यान्ते जयलक्ष्मीरशोकमश्रयत्।

जितराज्यस्त्वशोकः सशोको जातः। भयानके तस्मिन् सङ्ग्रामे सहस्रशः प्रतिपक्षीयान् विशसितान् दृष्टवतस्तस्य मनसि महान् शोकः सञ्जातः। अतः सद्य एवायं भूयस्समरोद्यमाद् विरराम। पश्चात्तापाभिभूतश्च सन्न्यासमङ्गीकृत्य बुद्धमहर्षेः शान्तान् शुद्धांश्चोपदेशानन्ववर्तत। अहिंसामेव परमं धर्ममाकलयन् मृगयाविनोदमपि त्यक्तवान्। आकीटादामर्त्यं सर्वानपि जीवराशीन् स्वीयप्रजात्वेनागणयत्।

सोऽयं राजर्षिः प्रजानां परितोषणे कृतमतिः परस्परं विवदमानानां विविधानां मतानां सामरस्यमुपपादयन् मतभेदमूलकं जनानां मिथो वैमनस्यं च परिहरन् प्रजासु मिथः सोदरस्नेहमुदपादयत्। स्वयं बौद्धमतमवलम्बमानोऽप्ययं मतान्तराय नाद्रुह्यत्। प्रत्युत स्वस्वधर्मात् प्रमाद्यतो जनानदण्डयत्। सर्वमतस्थानपि समदृष्ट्याऽपश्यत्।

अपि च—अयमशोकमहाराजः स्वीयानां प्रजानामाचारस्य प्रत्यवेक्षणाय, तासां लोकयात्रासरणेः परिष्करणाय

च स्वसाम्राज्ये समन्तादधिकृतान् पुरुषान् न्ययोजयत्। असंस्कृतानां वन्यवर्गाणां शिक्षणाय सर्वत्रोपदेशकान् न्ययुङ्क्त। किञ्च–अयं भूतदया, शान्तिः, कायचित्तयोः शुद्धिः, मातापित्रादीनां गुरुजनानामादरणम्–इत्यादीन् विषयानधिकृत्य चतुर्दश नियमान् निर्मितवान्। तांश्च शिलालेखेष्वर्पयित्वा प्रजानामवधारणाय भारतवर्षे समन्तात् प्रतिष्ठापयामास। तेषु खलु केचन शिलालेखाः सम्प्रत्युपलभ्यमानास्तस्य चरितं तदीयं राज्यभारप्रकारं च बोधयन्ति।

महाराजोऽयं स्वयमेवात्मानं प्रियदर्शिनमाह। तदनुरोधेन च प्रजानां प्रियमाचरन् मनुष्याणामिव मृगाणामपि तत्र तत्र चिकित्सालयानकल्पयत्। पथिकानां विश्रामाय बहुत्र पथिकाश्रमान् निरमापयत्। सर्वत्र पथि कूपतडागादीनखानयत्। सञ्चारसौकर्याय यथापेक्षं रथ्या अकारयत्। रथ्यानामुभयोः पार्श्वयोश्छायावृक्षानवर्धयत्। आबालवृद्धं प्रजाः सर्वाः परमानन्दमन्वभवन्।

❀ ❀ ❀

# शिविराजोपाख्यानम्

उशीनरेषु राजाऽभूद् धार्मिकः करुणापरः ।
दाता धीरो शिविर्नाम सर्वसत्त्वाभयप्रदः ॥ १ ॥
परीक्षितुं तस्य धर्मम् इन्द्रः श्येनवपुर्धरः ।
मायाकपोतवपुषम् अग्निमन्वपतद् द्रुतम् ॥२॥
श्येनाद् भीतः कपोतश्च शिवेरङ्कं समाश्रयत् ।
मनुष्यवाचा श्येनोऽथ राजानं शिविमब्रवीत् ॥३॥
राजन्, भक्ष्यमिमं मुञ्च कपोतं क्षुधितस्य मे ।
अन्यथा मां मृतं विद्धि कस्ते धर्मस्ततो भवेत् ॥४॥
इत्युक्तः श्येनराजेन महाकारुणिकः शिविः ।
अमुमुञ्चन् कपोतं तं श्येनराजमथाब्रवीत् ॥५॥
श्येनराज, भवद्भीत्या मामेष शरणं गतः ।
न त्याज्यस्तद् ददाम्यन्यद् मांसमेतत्समं तव ॥६॥

एवं महीपतेस्तस्य वाचं श्रुत्वा विहङ्गमः ।
प्रत्युवाच महीपालं जिज्ञासुस्तस्य मानसम् ॥७॥
यद्येवं तत्समं राजन्, आत्ममांसं प्रयच्छ मे ।
भक्षयित्वा यथातृप्ति गमिष्यामि स्वमालयम् ॥८॥
अथ राजा तथेत्युक्त्वा खड्गमादाय सादरम् ।
आत्ममांसं समुत्कृत्य तुलामारोपयत् स्वयम् ॥९॥
यथा यथा स्वकं मासम् उत्कृत्यारोपयन्नृपः ।
तथा तथा तुलामांसात् कपोतोऽभ्यधिकोऽभवत् ॥१०॥
असकृन् मांसमुत्कृत्य निर्मांसोऽभूद् यदा नृपः ।
तदा श्येनमनस्तृप्त्या आरुरोह स्वयं तुलाम् ॥११॥
तौ चेन्द्राग्नी ततस्त्यक्त्वा रूपं श्येनकपोतयोः ।
तुष्टावक्षतदेहं तं राजानं चक्रतुः शिविम् ॥१२॥
दत्त्वा चास्मै वरानन्यान् बहून् परमदुर्लभान् ।
तत्क्षणादेव तौ प्रीतावन्तर्धानमवापतुः ॥१३॥

* * *

## ऐन्द्रजालिक—कौतुकम्

एकदा कश्चनैन्द्रजालिको महाराजविक्रमसमीपमागत्य सप्रणाममवदत्—'देव ! त्वं सकलकलाभिज्ञः, भवतः समीपमागत्यानेकैः महेन्द्रजालिकैः स्वस्वलाघवानि दर्शितानि । अद्य ममाप्येकं लाघवं निरीक्षणीयम् ।'

राज्ञोक्तम्—'नेदानीमवसरोऽस्माकम्, प्रभाते द्रक्ष्यामः ।' ततः प्रभाते कश्चित् महाकायः विपुलकन्धरः पुरुषः आत्मनः स्त्रिया युक्तः समागत्य सभायां राजानं प्रणतवान्, उवाच च—'देव ! अहं महेन्द्रस्य सेवकः । कदाचित् स्वामिना शप्तोऽधुना भूमण्डले तिष्ठामि । इयं मम भार्या । अद्यैव देवासुराणां महद् युद्धं प्रारब्धम् । अहमपि स्वभार्यां भवतः पार्श्वे निक्षिप्य युद्धार्थं गमिष्यामि ।'

एवमुक्त्वा भार्यां च राज्ञः समीपे निक्षिप्य गगने उत्पतितः। क्षणेनैवाकाशे महान् भीषणरवो जातः—'रे रे' मारय मारय, घातय घातय–इति।' सभायामुपविष्टाः सर्वेऽपि लोका ऊर्ध्वमुखाः सकौतुकं यावत् पश्यन्ति स्म तावद् गगनात् खड्गो रक्तलिप्तस्तथैको बाहुः पतितः। एवं सर्वैरवलोक्य भणितम्—'अहो! एतस्याः स्त्रिया वीरः पतिः संग्रामे प्रतिभटैर्हतः, तस्यैको बाहुः खड्गश्च पतितः।' एवं वदत्स्वेव तेषु पुनः शिरश्च पतितम्, ततः कबन्धोऽपि पतितः।

एतत् सर्वं दृष्ट्वा सा स्त्री रोदितुमारब्धा, उवाच च–'देव, मम भर्ता रणाङ्गणे युध्यमानः शत्रुभिर्निहतः। तस्येदं शिरः सखड्गो बाहुः कबन्धश्च प्रमाणानि! इदानीमेतच्छरीरं कस्य कृते रक्षामि। तद्देहि भर्त्रा सहाग्निप्रवेशाभ्यनुज्ञाम्। यतः—

शशिना सह याति कौमुदी,
सह मेघेन तडित् प्रलीयते।
प्रमदा पतिमार्गगा इति,
प्रतिपन्नं हि विचेतनैरपि ॥१॥

मृते भर्तरि या नारी समारोहेद् हुताशनम्।
साऽरुन्धतीव पूज्या स्यात् स्वर्गलोके निरन्तरम् ॥२॥

तस्यास्तद् वचनं श्रुत्वा राजा श्रीखण्डादिभिः चितां विरचय्य तस्यै अनुज्ञां ददौ। सा चानुज्ञाता भर्तुः शरीरेण सममग्निं विवेश। ततः सूर्योऽस्तमगात्।

प्रभाते राज्ञि विक्रमे सिंहासनमलङ्कुर्वति स एव पुरुषः पूर्ववत् खड्गहस्तः समागत्य राज्ञः कण्ठे कल्पतरु-कमलग्रथितां मालां निधाय, तस्मै नानाविधयुद्धगोष्ठीः वक्तुं प्रवृत्तः। तं समागतं दृष्ट्वा सर्वाऽपि सभा विस्मयं गता। पुनश्च तेन भणितम्—'राजन्, मयि अस्मात् स्थानात् स्वर्गं गते, तत्र महेन्द्रस्य दैत्यानाञ्च महान् संग्रामोऽभूत्। तस्मिन् बहवो राक्षसा दैत्याश्च हता अन्ये पलायिताः। युद्धावसाने देवेन्द्रेण भणितम्—भो नायक! त्वयाद्य भूतले न गन्तव्यम्। तव शापस्यावसानं जातम्। तवाहं प्रसन्नोऽस्मि।'

देवेन्द्रवचनं श्रुत्वा मयोक्तम्—'देवराज, भवदाज्ञा शिरोधार्य्या। परमत्रागमनसमये मया भार्या विक्रमादित्यसमीपे निक्षिप्ता। तां गृहीत्वा झटिति पुनरागमिष्यामि

इति पुरन्दरमुक्त्वा समागतोऽस्मि। अधुना सा मम भार्या सत्वरं दातव्या येन मे स्वर्गगमने विलम्बो न भवेत्' इति।

तद्वचनं श्रुत्वा राजा परं विस्मितः तूष्णीं स्थितः पुनस्तेन गदितम्—'राजन्! किं जोषमास्यते ?'

राज्ञः समीपस्थैर्भणितम्—'तव भार्याग्निं प्रविष्टा।'

तेनोक्तम्—'किमर्थम् ?'

ते तु सर्वे निरुत्तरीभूता आसन्।

पुनरुक्तं तेन—'विक्रमभूमिपाल! परनारी-सहोदर! किमिदमकार्यं क्रियते ? देहि मे मत्पत्नीम्।'

ततो राज्ञोक्तम्—भद्र! भवतः खड्गं, बाहुं, शिरः, कवन्धं च क्रमेण पतितं दृष्ट्वा, भवन्तं युद्धनिहतं मत्वा तव पत्नी ममानुमत्यानलं प्रविष्टवती।'

तेन पुरुषेणोक्तम्—'राजन्! नैतद् विश्वसिमि। सुरूपा युवती च मे पत्नी भवता निजगृहे गोपायिता।'

ततः सकलसभासद्भिरुक्तम्—'भो नायक! अस्माकं समक्षं सानलं प्रविष्टा।'

ततः 'नहि नहि' इत्युक्त्वा नायकः त्वरितमुत्थाय, सिंहासनपश्चाद्वर्तिगृहाभ्यन्तरात् तामेव भार्यां करे गृहीत्वा

राजसभामध्यमानीय तद्वक्त्रावरणञ्चोन्मोच्य प्रदर्शितवान् । ततः सर्वे लज्जावनतमुखाः परं विस्मयं जग्मुः ।

अथ स सहासं राजानमुक्तवान्–'महाराज ! ब्रह्मायुर्भव, अहं स महेन्द्रजालिकः । तव पुरतो मयेन्द्रजालविद्यालाघवं दर्शितम् । तदा प्रसन्नेन राज्ञा बहु पारितोषिकं दत्त्वा बहुमानपुरस्सरं प्रस्थापितः स्वगृहं जगाम ।

❀ ❀ ❀

# प्रभातवर्णनम्

(१)

उदयति मिहिरो विदलिततिमिरो
भुवनं कथमभिरामम् ।
प्रचरति चतुरो मधुकरनिकरो
गुञ्जति कथमविरामम् ॥

(२)

विकसति कमलं विलसति सलिलं
पवनो वहति सलीलम् ।
दिशि दिशि धावति कूजति नृत्यति
खगकुलमतिशयलोलम् ॥

( ३ )

शिरसि तरूणां रविकिरणानां
खेलति रुचिररुणाभा ।
उपरि दलानां हिमकणिकानां
कापि हृदयहरशोभा ॥

( ४ )

प्रसरति गगने नरपतिभवने
दुन्दुभिदमदमनादः ।
भज परमेशं पठ सनिवेशं
भवतादनुपममोदः ॥

❀ ❀ ❀

## जीमूतकेतोरौदार्यम्

अस्ति हिमवान् नाम पर्वतराजः। तत्र च जीमूतकेतुर्नाम विद्याधराधिपः प्रतिवसति स्म। तस्य गृहे पितृक्रमागतः कल्पवृक्ष आसीत्। यदा यदा नृपो यत् कामयते तत्क्षणादेव स तत्तस्मै ददाति। कदाचिदसौ राजा तमभ्युपेत्योवाच—'कल्पतरो! सर्वदास्माभिः त्वत्तः सर्वमीप्सितं प्राप्यते, तदपुत्राय म एकं गुणवन्तं पुत्रं देहि।'

तदा कल्पतरुरवादीत्—'राजन्! उत्पत्स्यते तवैकः पुत्रः दानवीरः सर्वभूतहितकरश्च।'

कालान्तरे तस्य तनयो जातः।

क्रमाच्च यौवराज्यस्थः स विजने पितरमवदत्—'तात! भवेऽस्मिन् सर्वे भावाः क्षणभङ्गुराः, केवलमेकं यश एव स्थिरम्। या च सम्पत् सा विद्युदिव केवलं लोकलोचन-

खेदाय, परेषामनुपकारिणी। तदेष योऽस्माकं कल्पतरुरस्ति एष चेत् परार्थं विनियुज्येत तदा महत् फलं लब्धं भवेत्। अहन्तु तथा कर्तुमिच्छामि यथा एतस्य सामर्थ्येन सर्वेऽर्थिनोऽदरिद्रा भवन्तु।'

इति पितरं विज्ञाप्य तदनुज्ञामवाप्य च स जीमूतवाहनो गत्वा तं कल्पतरुमब्रवीत्—'देव ! अद्यास्माकमेकं वाञ्छितं पूरय, इमामखिलां पृथ्वीमदरिद्रां कुरु।'

इत्युक्तस्तेन कल्पवृक्षः भूतले भूरि कनकं ववर्ष। प्रजा निखिलाः समृद्धा ननन्दुः। जीमूतवाहनस्य यशः सर्वत्र प्रथितमभवत्।

अथैकदा जीमूतवाहनः पितरमेत्याब्रवीत्—'तात ! शरीरमिदं जलबुद्बुदसन्निभम्। श्रियः प्रवातदीपचपलाः। तदा राज्यं मुक्त्वाहं क्वापि वनं गमिष्यामि।'

इत्युक्तवन्तं तं जीमूतकेतुः प्रत्यभाषत—'पुत्र ! मयापि वनं गन्तव्यं, वृद्धस्य मम का स्पृहा ?'

एवमवधार्य पित्रा जनन्या च सह स जीमूतवाहनः मलयाचलं जगाम। तत्र पितृपरिचर्यापरः कञ्चित् कालमनयत्।

अथैकदा सिद्धाधिराजस्य विश्वावसोः सुतः मित्रावसुस्तस्य जीमूतवाहनस्य मित्रमभवत् । तस्य च मलयवती कनीयसी स्वसा । एकदाऽसौ जीमूतवाहनमभ्युपेत्योवाच—'अहं स्वस्वसारं तुभ्यं दातुमिच्छामि ।'

जीमूतवाहनस्तदमन्यत ताञ्चोपयेमे ।

कृतोद्वाहः जीमूतवाहनः कदाचित् विश्वावसुना सह जलधेः वेलावनान्यवलोकयितुमगात्। अपश्यच्च तत्र "हा पुत्र ! हा पुत्र !" इति क्रन्दन्तीं जननीमाश्वासयन्तं कञ्चित् पुरुषम् ।

जीमूतवाहनेन—'कस्त्वं, किमीहसे, कथञ्च ते माता त्वामनुशोचति ?' इति पृष्टः सोऽवदत्—

"महाभाग ! पुरा किल हरेर्लब्धवरः गरुडः नागभक्ष्यः यं कञ्चन पन्नगं पश्यति तं भक्षयति । एवं तेन समस्तं रसातलं निर्नागतां नीतम् । अनुदिनञ्चैतदालोक्य वासुकिः प्रार्थनापूर्वं समयं कृतवान्—'हे पक्षीन्द्र ! तवाहारार्थं प्रत्यहमेकैकं नागमहं पयोधिपुलिनवर्तिन्यचले प्रेषयिष्यामि । त्वया च पाताले नैव प्रवेष्टव्यम् ।'

एवं वासुकिनाभ्यर्थितः पक्षिराजः प्रत्यहं तत्प्रेषितनागं भक्षयति। अद्य तु शङ्खचूडनाम्नो मम वारः।"

इति तस्य वचः श्रुत्वा जीमूतवाहनः समभाषत—'भद्र! विषण्णो मा भव। अहमेवात्मानं त्वत्स्थाने गरुत्मते समर्प्य त्वां रक्षामि। त्वयि जीविते ते पितरौ तोक्ष्यतः।'

तदाकर्ण्य शङ्खचूडोऽब्रवीत्—'महासत्व! मैवं वद। नहि काचस्य कृते मुक्तामणेः क्षतिर्युज्यते।'

एवं जीमूतवाहनं निषिध्य स वारिधेस्तीरवर्तिनं गोकर्णाख्यं शिवं नमस्कर्तुम् अन्तकाले जगाम।

गते तस्मिन् जीमूतवाहनः तस्य त्राणायात्मदानस्यावसरं मन्यमानः केनचित् व्यपदेशेन मित्रावसुं गृहं प्रहित्य स्वयं वध्यशिलामारुरोह।

क्षणाच्च पक्षीन्द्रः समाजगाम। तं महासत्त्वं चाहत्य चञ्च्वा जहार, गिरिशिखरं नीत्वा च भक्षयितुं प्रावर्तत।

अत्रैवान्तरे शङ्खचूडोऽपि तत्राजगाम। वध्यशिलातलं च रुधिरसिक्तमवलोक्याचिन्तयत्—नूनन्तेन महात्मना मदर्थे जीवनं दत्तम्। विचिन्त्य यावत्तमन्विष्यति

तावत् पर्वत-शिखरे तं गरुत्मता खाद्यमानमवलोकयामास। अवलोक्यैवासौ तत्प्रदेशं प्रत्यधावत्।

गरुडश्च तं जीमूतवाहनं क्षतदेहमपि हृष्टं विलोक्य क्षणाद्विरतः सविस्मयमचिन्तयत्--'अयं महासत्त्वः, यः भक्ष्यमाणोऽप्यविपद्य प्रत्युत हृष्यति।'

इति विमृशन्तं तं जीमूतवाहनः जगाद—

'पक्षिराज! ममाद्यापि शरीरे मांसशोणितं वर्तते, तृप्तिं च पश्यामि न ते, तत् कस्माद्भक्षणाद्विरतोऽसि?'

अत्रैवान्तरे शङ्खचूडः दूरात्प्राप्तस्तमभाषत--'गरुत्मन्! मा तावत्, नैष नागः, मुञ्चैनम्।'

खगराजोऽतीव विस्मितः समभवत् उवाच च--'श्लाघ्योऽयं महात्मा येन परार्थं प्राणदायिना विश्वमिदं जितम्। तदहं पापशुद्धये वह्निमाविशामि।'

एवंवादिनं तं जीमूतवाहनोऽब्रवीत्--'खगेन्द्र! किं विषीदसि? पापाद् बिभेषि चेत्, अतः परं ते भुजङ्गा न भक्ष्याः।'

गरुत्मान् तथेति तस्य वचः प्रत्यपद्यत। स्वयञ्चामृत-मानीय तेन तमक्षताङ्गमकरोत्।

एवं जीमूतवाहनः स्वौदार्येण यशः प्राप।

* * *

## गौतम्या धैर्यम्

जन्मान्तरकृतं कर्म शुभं वाप्यथवाऽशुभम् ।
फलं स्वानुगुणं पुंसः प्रयच्छत्यत्र जन्मनि ॥१॥

गौतमी नाम काऽपि पतिहीना स्थविरा सह पुत्रेण वनमगात् । तत्र च शमप्रधाना कन्दादिकमाहरन्ती तपः-परायणा बभूव । अथ सा कदाचित् पुत्रमाश्रमे निक्षिप्य कार्यवशाद् बहिर्जगाम । तदानीमकस्मादागतेन केनापि कृष्णसर्पेण दष्टस्तत्तनयः पञ्चत्वं गतः । सा च संकल्पितं कार्यं सम्पाद्य स्वाश्रममागता गतासुं तनयमद्राक्षीत् । अथ पुत्रवत्सला तपस्विनी शोकं विवेकबलेन रुन्धती प्राकृतो जन इव मुक्तकण्ठं न विललाप, परं मातृ-स्नेहाकृष्टा सूनुमङ्के निधाय यत् किञ्चिद् ध्यायन्त्यासीत् ।

अत्रान्तरेऽर्जुनको नाम लुब्धकस्तं कृष्णसर्पं पाशेन संयम्य गौतमीसकाशमानिनाय । तां च तपस्विनी-मेवमवादीत्—'मातः ! अयं ते पुत्रहा नृशंसः पन्नगाधमः । नासौ पापो मोचनमर्हति । तत्कतमेन प्रकारेण हन्यताम् ? किमग्नौ प्रक्षिप्यताम् ? उत खण्डशश्छिद्यताम् ? आज्ञापयतु भवती इति ।'

तच्छ्रुत्वा गौतमी प्राह—'सुमुख ! किमनेन हतेन ? नह्यस्य हननेन मृतस्य प्राणाः प्रत्यागमिष्यन्ति । केवलं प्राणिवधजातेन दुरितेन स्पृश्येवहि । तदेनं मुञ्च ।'

अर्जुनकोऽब्रवीत्—'मातः ! स्वस्थाः खल्वेवं व्याहरन्ति, न शोकार्ताः । अतः शोकपीडितया भवत्या सापराधमेनं निहत्य शोको मुच्यताम् । 'कृतस्य प्रतिकर्तव्यम्' इति हि सनातनो धर्मः ।'

गौतमी प्राह—'सुमुख ! युक्तमुक्तं त्वया । तथापि धर्मात्मानः साधवः सापराधेऽपि मृदवो भवन्ति 'अपकारिणि यः साधुः स साधुः सद्भिरुच्यते' इति वचनात् । अतः सापराधमप्येतं मद्वचनात् मोक्तुमर्हसि ।'

अर्जुनकः पुनरब्रवीत्—'मातः ! नायं बालघाती नृशं-

सोऽनुकम्पनीयो भवत्या 'कृतागसं धर्मविदस्त्यजन्ति' इति श्रवणात् । अतः पापमत्रुं व्यालं हन्तुमनुमन्यतां भवती ।'

शमधना गौतमी व्याधेनैवमसकृद् बोधितापि व्यालं हन्तुं नानुमेने ।

अत्रान्तरे पाशपीडितः सर्पः कथञ्चिदुच्छ्वसन् मनुष्य-वाचा व्याधमेवं व्याजहार—'लुब्धक ! बालिशस्त्वं, न धर्मं जानासि । अतः शृणु । अहं हि मृत्युना भृत्यवत् प्रेरितो बालमेनमदशम् । नाहं स्वतन्त्रः । स्वामिकार्यं कुर्वाणा भृत्या न तेन कृत्येनापराधिनो भवन्ति । अतो-न मां निरपराधं हन्तुमर्हसि ।'

तदाकर्ण्य लुब्धकः प्राह—'पन्नग ! न युक्तमुक्तं भवता । मृत्युवचनेन प्रेरितोऽसि, त्वं मृत्युश्चेत्युभावेवात्र कारणं भवतः । यथा मृत्पात्रस्य निर्माणे दण्डचक्रादयोऽपि कारणं न केवलं कुलालस्तद्वत् । अतस्त्वं वध्य एव ।'

पन्नगो जगाद—व्याध ! निरूपितमपि धर्ममजानन् मय्येवाज्ञानमारोपयसि । मृत्पात्रस्य करणे दण्ड-चक्रादयोऽस्वतन्त्राः, कुलालस्तु स्वतन्त्रः । तद्वत्

प्रकृतेऽपि मृत्युरेव स्वतन्त्रो नाहम्। यथा च मखेषु हवींषि जुह्वतोऽपि ऋत्विजस्तत्फलं नाप्नुवन्ति, परं यजमान एवाप्नोति, तथा नाहमस्मिन् कर्मणि फलभाक्। अतो न मां हन्तुमर्हसि।'

एवं परस्परं विवदमानयोस्तयोर्मृत्युस्तत्राजगाम। पन्नगं चेदमब्रवीत्—'अहं किल कालेन प्रेरितस्त्वामस्मिन् कर्मणि प्रेरितवान्। यथा वायुना ततस्ततः कृष्यमाणा वायुतन्त्रा भवन्ति तथा कालेन कृष्यमाणोऽहं कालतन्त्रो भवामि। तत्कथं मामपराधिनं ब्रवीषि।'

तदाकर्ण्य पन्नगो जगाद—'मृत्यो! त्वं दोषवान् अदोष इति वा न ब्रवीमि। त्वयाहमस्मिन् कर्मणि नियोजित इत्येतावदेव जानामि। अतो मा कोपं कुरु। (लुब्धकं प्रति) अर्जुनक! अपि श्रुतं मृत्योर्भाषितम्? इतः परमनागसं मां मोक्तुमर्हसि।'

लुब्धकः प्राह—'पन्नग! त्वं मृत्युवचनेनादोषः कृतः, परं मृत्युस्त्वं चेत्युभावप्यत्र कारणम्। धिक्त्वां मृत्युवचनेन प्राणिघातकम्, मृत्युञ्चेतादृशे कर्मणि प्रेरयितारम्।'

तच्छ्रुत्वा मृत्युरर्जुनकमाह—

'विवशौ कालवशगावावां निर्दिष्टकारिणौ ।
नातो दोषेण मन्तव्यौ यदि सम्यक् प्रपश्यसि ॥२॥'

अत्रान्तरे कालः सरभसं समागत्य प्रोवाच—

'यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥३॥
अतो नाहं न वै मृत्युर्न सर्पो न तथा भवान् ।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ॥४॥'

तदाकर्ण्य गौतमी लुब्धकमुवाच—

'नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मणैवायं बालः शैशवे निधनं गतः ॥५॥
मया च तत्कृतं कर्म येनेदं दुःखमागतम् ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक, पन्नगम् ॥६॥'

तयैवमुक्तोऽर्जुनको पन्नगं मुक्तवान् । मृत्युकालौ च यथागतं गतौ । अतोऽद्यतनशुभाशुभयोर्जन्मान्तरीयं कर्मैव कारणम् ।

❀ ❀ ❀

## नकुलोलूकमार्जारमूषिकाणाम्

विनोदसुखलाभाय कथामाख्यामि ते शृणु ।
विदिशानगरीबाह्ये न्यग्रोधोऽभूत् महान् पुरा ॥१॥
चत्वारः प्राणिनस्तत्र वसन्तिस्म महातरौ ।
नकुलोलूकमार्जारमूषिकाः पृथगालयाः ॥२॥
भिन्ने भिन्ने बिले मूल आस्तां नकुलमूषिकौ ।
मार्जारो मध्यभागस्थे तरोर्महति कोटरे ॥३॥
उलूकस्तु शिरोभागेऽनन्यलभ्ये लतालये ।
मूषिकस्तु त्रिभिर्बध्यो मार्जारेण त्रयोऽपरे ॥४॥
अन्नाय मार्जारभयान् मूषिको नकुलस्तथा ।
स्वभावेनाऽप्युलूकश्च परिभ्रेमुर्निशि त्रयः ॥५॥
मार्जारश्च दिवा रात्रौ निर्भयः प्रभ्रमत्यसौ ।
तत्रासन्ने यवक्षेत्रे सदा मूषिकलिप्सया ॥६॥

जग्मुरन्येऽपि युक्त्या च सुकालेऽन्नाभिवाञ्छया ।
एकदा लुब्धकस्तत्र चाण्डालः कश्चिदाययौ ॥७॥
स मार्जारपदश्रेणिं दृष्ट्वा तत्क्षेत्रगामिनीम् ।
तद्वधायाभितः क्षेत्रं पाशान् दत्त्वा ततो ययौ ॥८॥
तत्र रात्रौ च मार्जारः स मूषिकजिघांसया ।
एत्य प्रविष्टस्तत्पाशैः क्षेत्रे तस्मिन्नबध्यत ॥६॥
मूषिकोऽपि ततोऽन्नार्थी स तत्र निभृतागतः ।
बद्धं तं वीक्ष्य मार्जारं जहर्ष च ननर्त च ॥१०॥
यावद्विशति तत्क्षेत्रं दूरादेकेन वर्त्मना ।
तत्र तौ तावदायातावुलूकनकुलावपि ॥११॥
दृष्टमार्जारबन्धौ च मूषिकं लब्धुमैच्छताम् ।
मूषिकोऽपि च तद् दृष्ट्वा दूराद्विग्नो व्यचिन्तयत् ॥१२॥
'नकुलोलूकभयदं मार्जारं संश्रये यदि ।
बद्धोऽप्येकप्रहारेण शत्रुर्मामेष मारयेत् ॥१३॥
मार्जारदूरगं हन्यादुलूको नकुलश्च माम् ।
तच्छत्रुसंकटगतः क्व गच्छामि करोमि किम् ॥१४॥
हन्त ! मार्जारमेवेह श्रयाम्यापद्गतो ह्ययम् ।
आत्मत्राणाय मां रक्षेत्पाशच्छेदोपयोगिनम्' ॥१५॥

इत्यालोच्य शनैर्गत्वा मार्जारं मूषिकोऽब्रवीत् ।
'बद्धे त्वय्यतिदुःखं मे तत्ते पाशं छिनद्म्यहम् ॥१६॥
ऋजूनां जायते स्नेहः सहवासाद्रिपुष्वपि ।
किन्तु मे नास्ति विश्वासस्तव चित्तमजानतः' ॥१७॥
तच्छ्रुत्वोवाच मार्जारो 'भद्र ! विश्वस्यतां त्वया ।
अद्यप्रभृति मे मित्रं भवान् प्राणप्रदायकः' ॥१८॥
इति श्रुत्वैव मार्जारस्तस्योत्सङ्गं स शिश्रिये ।
तद् दृष्ट्वा नकुलोलूकौ निराशौ ययतुस्तदा ॥१९॥
ततो जगाद मार्जारो मूषिकं पाशपीडितः ।
'गतप्राया निशा मित्र, तत् पाशांश्छिन्धि मे द्रुतम्' ॥२०॥
मूषिकोऽपि शनैश्छिन्दँल्लुब्धकागमनोन्मुखः ।
मृषा कटकटायद्भिर्दशनैरकरोच्चिरम् ॥२१॥
क्षणाद्रात्रौ प्रभातायां लुब्धके निकटागते ।
मार्जारेऽर्थ्यमाने द्राक् पाशांश्चिच्छेद मूषिकः ॥२२॥
छिन्नपाशेऽथ मार्जारे लुब्धकत्रासविद्रुते ।
मूषिको मृत्युमुक्तः सन् पलाय्य प्राविशद् बिलम् ॥२३॥
नाश्वसत् पुनराहूतो मार्जारेण जगाद च ।
'कालयुक्त्या ह्यरिर्मित्रं जायते न च सर्वदा' ॥२४॥

## खरनखरसिंह-कथा

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम् ।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥१॥

कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसतिस्म। स कदाचिदितश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो न किञ्चिदपि सत्त्वमाससाद। ततश्चास्तमनसमये महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास—'नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम्। तन्निभृतो भूत्वा तिष्ठामि।' एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो नाम शृगालः समायातः। स

च यावत्पश्यति, तावत्सिंहपदपद्धतिगुहायां प्रविष्टा न च निष्क्रमणं गता ।

ततश्चाचिन्तयत्—'अहो ! विनष्टोऽस्मि । नूनमस्या-मन्तर्गतेन सिंहेन भाव्यम् । तत्किं करोमि ? कथं ज्ञास्यामि ?' एवं विचिन्त्य द्वारस्थः फूत्कर्तुमारब्धः—'अहो बिल ! अहो बिल !' इत्युक्त्वा तूष्णींभूय भूयोऽपि तथैव प्रत्यभाषत—'भोः ! किं न स्मरसि यन्मया त्वया सह समयः कृतोऽस्ति यन्मया बाह्यात्समागतेन त्वं वक्तव्यः । त्वया चाहमाकारणीय इति । तद्यदि मां नाह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि ।'

अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्—'नूनमेषा गुहास्य समागतस्य सदा समाह्वानं करोति । परमद्य मद्भयान्न किञ्चिद् ब्रूते । अथवा साध्विदमुच्यते—

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः ।
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥ २ ॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति ।

एवं सम्प्रधार्य सिंहस्तस्याह्वानमकरोत् ।

अथ सिंहशब्देन सा गुहा प्रतिरवसम्पूर्णाऽन्यानपि दूरस्थानरण्यजीवाँस्त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकमपठत्—

'अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता॥ ३॥'

❀ ❀ ❀

## पितृभक्तिः

अस्ति चन्द्रपुरं नाम नगरम् । तत्र विक्रमसेनो नाम राजा बभूव । तस्मिन्नगरे हरिदत्तनामा श्रेष्ठी । तस्य भार्या श्रृङ्गारसुन्दरी नाम । तत्पुत्रो मदनविनोदनामा बभूव । तस्य पत्नी पद्मावती । सा सोमदत्तश्रेष्ठिनः कन्या । मदनविनोदस्तु नितान्तं विषयासक्तः कुपुत्रः पितुः शिक्षां न शृणोति । तस्य द्यूतमद्यमृगयादिष्वतीवासक्तिः । कुमार्गचारिणं तं कुपुत्रं दृष्ट्वा तत्तातो हरिदत्तो भृशं दुःखितः सञ्जातः । तं हरिदत्तं कुपुत्रदुःखेन पीडितं विमृश्य त्रिविक्रमो नाम तस्य सखा कश्चन द्विजः स्वसद्मतो नीतिनिपुणमेकं शुकं सारिकां च तमुपनीय प्राह—

'सखे हरिदत्त ! त्वमेतं शुकं पुत्रवत् परिपालय । एतस्य पालनेन तव दुःखं दूरीभविष्यति ।'

हरिदत्तस्तु तं कीरं गृहीत्वा पुत्राय समर्पयत् । स च मदनविनोदेन स्वर्णपञ्जरे स्थापितः परिपोषितश्च । अथैकदा रहसि शुको मदनं प्राह—हे सखे !

पित्रोस्ते दुःखिनोर्दुःखात् पतत्यश्रुचयो यदि ।
तेन पापेन ते वत्स पतनं देवशर्मवत् ॥ १ ॥

स प्राह—'कथमेतत् ?' शुकः कथयति—

"अस्ति पञ्चपुरं नाम नगरम् । तत्र सत्यशर्मा नाम ब्राह्मणः । तद्भार्या धर्मशीलानाम्नी । पुत्रस्तु देवशर्मा । सचाधीतविद्यः पित्रोः प्रच्छन्नतया देशान्तरं गत्वा भागीरथीतीरे तपः कृतवान् । एकदा स तपस्वी गङ्गातीरे जपार्थमुपविष्टः । तस्मिन् काले कयाचित् बलाकयोड्डीयमानया तदङ्गे पुरीषोत्सर्गः कृतः । स च तपस्वी क्रोधाकुलितनेत्रो यावदूर्ध्वं पश्यति तावत् क्रोधाग्निना भस्मीभूतां बलाकां भूमौ पतितां दृष्ट्वा स्वतपोबले जातगर्वः नारायणद्विजगृहे भिक्षार्थं ययौ । स्वभर्तृशुश्रूषापरायणया ब्राह्मण्या कोपाविष्टो निर्भर्त्सितः क्षणमिहाऽयमुक्तश्च 'नाहं

बलाकेव तव कोपास्पदम् ।' स च प्रच्छन्नपातकविज्ञानाद् भीतो विस्मितश्च तां स्वरहस्यज्ञानकारणं पप्रच्छ । सा च तं स्वाभिप्रायज्ञानार्थं धर्मव्याधपार्श्वे वाराणसीं प्रेषयामास ।

तत्र गतोऽसौ रक्ताक्तहस्तं यमप्रतिमं मांसविक्रयं विदधानं तं विलोक्य जिज्ञासुरिव तत्पुरतः स्थितः । व्याधेन स्वागतप्रश्नपूर्वं स्वगृहं नीत्वा सभक्तिकं निजपितरौ भोजयित्वा पश्चात्तस्य भोजनं दत्तम् । ततः स व्याधं ज्ञान-कारणमपृच्छत्—'कथं सती ज्ञानवती, कथं च त्वं ज्ञानवान् ?' व्याधेनोक्तम्—

'निजान्वयप्रणीतं यः सम्यग्धर्मं विषेवते ।
उत्तमाधममध्येषु विकारेषु पराङ्मुखः ॥ २ ॥
स गृही स मुनिः साधुः स योगी स च धार्मिकः ।
पितृशुश्रूषको नित्यं जन्तुः साधारणश्च यः ॥ ३ ॥

मम तस्याश्च ज्ञाने पितृशुश्रूषणमेव परं कारणम् । त्वं च निजपितरौ परित्यज्य भ्रमन् मादृशां न सम्भाषणार्हः, परमतिथिं ज्ञात्वा जल्पितः ।'

एवमुक्तः स ब्राह्मणो विनयपरं व्याधं—'कुतोऽहमसंभाव्य' इति पप्रच्छ । तेनोक्तम्—

'न पूजयन्ति ये पूज्यान् मान्यान् नो मानयन्ति ये।
जीवन्ति निन्द्यमानास्ते मृताः स्वर्गं न यान्ति च ॥४॥'
व्याधेन बोधितस्तेन स ययौ गृहमात्मनः।
अभवत् कीर्तिमाँल्लोके परतः कीर्तिभाजनम् ॥५॥
तस्माद् वणिग्धर्मं स्वकुलोद्भवं स्मर पित्रोश्च विनय-
परो भव।"

* * *

## विद्याप्रशंसा

विद्या ददाति विनयं विनयाद्याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥१॥

विद्या शस्त्रश्च शास्त्रश्च द्वे विद्ये प्रतिपत्तये ।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥२॥

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ॥३॥

हर्तुर्न गोचरं याति दत्ता भवति विस्तृता ।
कल्पान्तेऽपि न या नश्येत् किमन्यद्विद्यया समम् ॥४॥

शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना ।
न गुह्यगोपने शक्तं न च दंशनिवारणे ॥५॥

सद्विद्या यदि का चिन्ता वराकोदरपूरणे ।
शुकोऽप्यशनमवाप्नोति राम रामेति च ब्रुवन् ॥६॥

वसुमतीपतिना नु सरस्वती
बलवता रिपुणापि न नीयते ।
समविभागहरैर्न विभज्यते
विबुधबोधबुधैरपि सेव्यते ॥७॥

न चौरहार्यं न च राजहार्यं
न भ्रातृभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं
विद्याधनं सर्वधनप्रधानम् ॥८॥

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं
किं किं न साधयति कल्पलतेव विद्या ॥९॥

विद्या नाम नरस्य रूपमधिकं
प्रच्छन्न गुप्तं धनम् ।
विद्या भोगकरी यशःसुखकरी
विद्या गुरूणां गुरुः ॥
विद्या बन्धुजनो विदेशगमने
विद्या परं दैवतम् ।
विद्या राजसु पूज्यते न तु धनं
विद्याविहीनः पशुः ॥१०॥

Very important

## धर्मबुद्धि-कथा

अस्ति धरापृष्ठे जाङ्गलाभिधो ग्रामः। तत्र मित्रद्वयं वर्तते धर्मबुद्धिर्दुष्टबुद्धिश्चेति। अन्यदा तौ द्वावपि धनाशया देशान्तरं गतौ। कियद्भिर्दिनैः धनमर्जयित्वा स्वग्रामगतौ परस्परं मन्त्रं चक्रतुः—'यत् पिप्पलाधो धनं क्षिप्त्वा स्वल्पं स्वगृहं नीयते। पश्चाद् विभज्यते शेषम्।' तथा विधाय तौ निजनिकेतने गतौ। हृष्टतुष्टौ सुखास्वादतत्परौ स्थितौ। अत्रान्तरे दुष्टबुद्धिना यत् कृतं तन्निशम्यताम्। वस्तुतस्तद् वक्तुमपि न युज्यते। यतः—

न वक्तव्यं ध्रुवं किञ्चित् पापं दृष्टं श्रुतं मया।
कथापि खलु पापानामलमश्रेयसे यतः॥

तेन च दुष्टबुद्धिना तद् द्रव्यमुत्पाट्य गृहीत्वा च निज-

गृहमानीतम् । कालक्रमेण च सङ्गतौ पिप्पलाधः स्थितं द्रव्यं ग्रहीतुं गतौ । यावदवलोकयतस्तावद् द्रव्यं नास्ति । धर्म-बुद्धिस्ततो गत्वा मन्त्रिणोऽग्रे न्यवेदयत् । कुबुद्धिनाहृतेनोत्तरं कृतम्—'सहस्रस्य पणो मुक्तः एतदर्थं शपथं दापयिष्यामि ।' मन्त्रिणोक्तमेवमेवास्तु ।

द्वितीयेनापि प्रतिपन्नं यदा तदा मन्त्रिणा प्रतिभुवौ गृहीत्वा मुक्तौ पृथक् पृथक् गृहं गतौ ।

ततो दुष्टबुद्धिर्निजं पितरं विदितार्थं कृत्वा वृक्षकोटरे निचिक्षेप । प्रभाते सचिवस्तौ च वादिनौ कौतुकी लोकश्च तं पिप्पलं ययुः । दुष्टबुद्धिः स्नातः कृताञ्जलिः सत्यं कृत्वा जगाद—'इदं सत्यं ब्रूहि नगोत्तम, यदि द्रव्यमपहृतं तदानेन हृतमिति वाच्यम् । यदि न हृतं तदानेन न हृतमिति वाच्यम् ।'

तच्छ्रुत्वा कोटरस्थितेन तत्तातेन नहीति जल्पितं सर्व-लोकप्रत्यक्षम् । ततो धर्मबुद्धिः कथं भवतु -इति प्रश्नः—

धर्मबुद्धिस्तं शब्दं तत्पितुः परिज्ञाय कोटरे वह्निं जज्वाल । तं पितरं कोटरात् फूत्कुर्वन्तमर्धज्वलितं च दृष्ट्वा दुष्टबुद्धेर्निग्रहं विधाय मन्त्री धर्मबुद्धिमान्दयामास ।

## मौर्ख्यफलम्

आसीद् बहूनां मुग्धानां मध्ये कश्चित् क्वचिन् मठे। स कदाचित् केनचित्पाठ्यमानाद्धर्मशास्त्रात्तडागकर्तुः सुमहत् फलमश्रौषीत्। ततस्स धनाढ्यस्तस्मान्मठान्नातिदूरे महान्तं वारिपूरितं तडागमेकं कारयामास।

एकदा स मुग्धवरः केनाप्युत्पाटितान्यस्य पुलिनानि व्यलोकयत्। अन्येद्युश्च तथैव सोऽन्यतस्तस्य तडागस्य तटमुत्खातं दृष्ट्वा सोद्वेगमचिन्तयत्–'अद्यप्रभृति प्रातरारभ्येहैव वासरं स्थास्यामि, द्रक्ष्यामि च कः करोत्येतदिति' पर्यालोच्य स मठं ययौ।

अन्येद्युर्यावदेत्य स तत्रास्ते तावद्दिवोऽवतीर्य शृङ्गाभ्यां तटं खनन्तं वृषभमद्राक्षीत्। तञ्च दिव्यं वृषभं दृष्ट्वा किं

दिवं यास्यनेन सहेति विविच्योपेत्य च तत्पुच्छं हस्ताभ्यामग्रहीत्। ततः पुच्छाग्रलग्नं भौतिकं तमुत्क्षिप्य वेगात् स वृषः क्षणेन कैलासं स्वं धाम निनाय। तत्र स भौतो जडः दिव्यानि भक्ष्याणि मोदकान्यवाप्य भुञ्जानः कतिचिद्दिनानि सुखं न्यवसत्।

एकदा स भौतमूर्खतमः गतागतानि कुर्वन्तं तं महावृषं दृष्ट्वा दैवमोहितः वृषस्यास्य पुच्छलग्नः पुनः स्वं मठं गत्वा तत्र बान्धवान् पश्यामि, तेभ्यश्चाद्भुतमिदं कथयित्वा पुनरेष्यामीत्यालोच्य तस्य गच्छतो वृषस्य पुच्छमालम्ब्य भूतलमगात्। ततः प्राप्तमठः स भौतोऽन्यैस्तत्रस्थैराश्लिष्य 'क्व गतोऽसीति' पृष्टः तं वृत्तान्तं सर्वं तेभ्यः शशंस। ततः सर्वे ते तं प्रार्थयन्तेस्म—'भ्रातः! प्रसीद, अस्मानपि तत्र नीत्वा तानि मोदकानि भोजयेति'। तदाकर्ण्य तथेत्युक्त्वा युक्तिमुक्त्वा चापरेऽहनि तान् तडागोपान्तमनयत्। स च वृषस्तत्रायया। तेषां मुख्यः पाणिद्वयेन तस्य लांगूलं जग्राह। कश्चित्तस्य मुख्यजनस्य चरणौ, अतोऽपरस्तस्य धृतचरणस्य चरणावग्रहीत्। इत्यन्योन्यविलग्नैस्तैर्भौतैर्यावच्छृङ्खला रचिता, तावत् स वृषः जवान्नभ उत्पपात।

लाङ्गूलालम्बिभौते वृषभे दिवमुत्पतितवति क्षुल्यभौतं तमपरो भौतः पर्यपृच्छत्—'भद्र, परिमाणन्तावदाख्याहि । दिवि यथेष्टसुलभानि यानि मोदकानि भक्षितानि त्वया तानि किम्प्रमाणानि' ? ततो दैवमोहात् स तं वृषपुच्छं विमुच्य पद्मकोषाकारौ करौ संश्लिष्टौ कृत्वा यावदियत्प्रमाणानीति वक्ति, तावत्सोऽन्ये च खान्निपत्य पञ्चत्वमापुः ।

निर्विमर्षा प्रश्नोत्तरक्रिया दोषायैव ।

* * *

## चारु-चर्या

ब्राह्मे मुहूर्ते पुरुषस्त्यजेन्निद्रामतन्द्रितः ।
प्रातः प्रबुद्धं कमलमाश्रयेच्छ्रीगुणाश्रया ॥ १ ॥

पुण्यपूतशरीरः स्यात् सततं स्नाननिर्मलः
तत्याज वृत्रहा स्नानात् पापं वृत्रवधार्जितम् ॥ २ ॥

न त्यजेद्धर्ममर्यादामपि क्लेशदशां श्रितः ।
हरिश्चन्द्रो हि धर्मार्थी सेहे चाण्डालदासताम् ॥ ३ ॥

न सत्यव्रतभङ्गेन कार्यं धीमान् प्रसाधयेत् ।
ददर्श नरकक्लेशं सत्यनाशाद् युधिष्ठिरः ॥ ४ ॥

कुर्वीत सङ्गतं सद्भिर्नासद्भिर्गुणवर्जितैः ।
प्राप राघवसङ्गत्या प्राज्यं राज्यं विभीषणः ॥ ५ ॥

गुणस्तवेन कुर्वीत महतां मानवर्धनम् ।
हनूमानभवत् स्तुत्या रामकार्यभरक्षमः ॥ ६ ॥

न क्रोधयातुधानस्य धीमान् गच्छेदधीनताम् ।
पपौ राक्षसवद्भीमः क्षतजं रिपुवक्षसः ॥ ७ ॥

औचित्यप्रच्युताचारो युक्त्या स्वार्थं न साधयेत् ।
व्याजवालिवधेनैव रामकीर्तिः कलङ्किता ॥ ८ ॥

हितोपदेशं श्रुत्वा तु कुर्वीत च यथोचितम् ।
विदुरोक्तमकृत्वा हि शोच्योऽभूत् कौरवेश्वरः ॥ ९ ॥

गुरुमाराधयेद्भक्त्या विद्याविनयसाधनम् ।
रामाय प्रददौ तुष्टो विश्वामित्रोऽस्त्रमण्डलम् ॥ १० ॥

न पुत्रायत्तमैश्वर्यं कार्यमार्यैः कदाचन ।
पुत्रार्पितप्रभुत्वोऽभूद् धृतराष्ट्रस्तृणोपमः ॥ ११ ॥

परोपकारं संसारसारं कुर्वीत सत्यवान् ।
निदधे भगवान् बुद्धः सर्वसत्त्वोद्धृतौ धियम् ॥१२॥

जन्मावधि न तत् कुर्यादन्ते सन्तापकारि यत् ।
सस्मारैकशिरःशेषः सीताक्लेशं दशाननः ॥ १३ ॥

परमात्मानमन्तेऽन्तर्ज्योतिः पश्येत् सनातनम् ।
तत्प्राप्त्या योगिनो जाताः शुकशान्तनवादयः ॥१४॥
अन्ते सन्तोषदं विष्णुं स्मरेद्धन्तारमापदाम् ।
शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ १५ ॥

* * *

## हासविद्योपाख्यानम्

हासेन विद्यया यस्तु प्रभोर्भवति वल्लभः ।
विकृताङ्गवचःकृत्यैर्हासविद्यः स उच्यते ॥ १ ॥

बभूव काञ्ची नाम राजधानी, तस्यां सुप्रतापो नाम राजा । तत्रैकदा कस्यापि धनिकस्य धनं चोरयन्तश्चत्वारश्चौराः सन्धिद्वारे प्रशास्तृपुरुषैः प्राप्ताः, शृङ्खलेन बद्ध्वा राज्ञे निवेदिताश्च । राजा च घातकपुरुषानादिदेश—'रे रे घातकपुरुषाः, चतुरोऽपि चौरानेतान् नगराद् बहिर्नीत्वा शूलमारोप्य मारयत ।' ततो राजाज्ञया घातकपुरुषैस्त्रयश्चौराः शूलमारोप्य हताः । चतुर्थेन चिन्तितम् यत्—

प्रत्यासन्नेऽपि मरणे रक्षोपायो विधीयते ।
उपाये सफले रक्षा भवत्येव न संशयः ॥ २ ॥

चौर उवाच—'रे रे घातकपुरुषाः, त्रयश्चौरा युष्माभिर्हता एव। इदानीं राजाग्रे मद्वचनं श्रावयित्वा मारयत। यतोऽहमेकां महतीं विद्यां जानामि,मयि मृते साऽस्तंयास्यति। राजा तु तां गृहीत्वा मां मारयतु । तेन विद्या मर्त्यलोके तिष्ठेत्।' घातका ऊचुः—'रे चौर पुरुषाधम ! वध्यस्थानमानीतोऽसि। किमधुना जीवितुमिच्छसि ? कां विद्यां जानासि ? कथं वाधमस्य विद्या भूपालेन ग्रहीतव्या ?' चौर उवाच—'रे घातकाः, किं ब्रूथ ? राजकार्यबाधां कर्तुमिच्छथ। यदि राजा ज्ञास्यति तदावश्यं तेन ग्रहीतव्या महतीयं विद्या। किञ्च, विद्यावार्ताकथकेभ्यो युष्मभ्यमपि प्रभुणा प्रसादः कर्तव्यः।'

ततस्तस्य चौरस्य वचनैः स्वामिकार्यानुरोधेन घातकैः सा वार्ता राज्ञे निवेदिता। राजा च कौतुकमाकर्ण्य चौरमाहूय प्रष्टुमारभत—

राजोवाच—'रे कां विद्यां जानासि ?' चौर उवाच—'देव, सुवर्णकृषिं जानामि।' राजोवाच—'का परिपाटी ?' चौर उवाच—'देव, सर्षपपरिमाणानि सुवर्णबीजानि कृत्वा भूमावुप्यन्ते। मासमात्रेण सर्षपसदृशा एव कन्दला भवन्ति।

देवः प्रत्यक्षं पश्यतु।' राजोवाच—'चौर, सत्यमेतत् ?' चौर उवाच—'देवस्य पुरतः कस्यासत्यभाषणे शक्तिः ? यदि मम वचनं व्यभिचरति, तदा मासान्ते ममाप्यन्तो भविष्यति। तदापि देवः शास्तिकरणे च प्रभुरेव स्थास्यति।'

राजोवाच—'भद्रम्, वप सुवर्णम्।' ततश्चौरः सुवर्णं दाहयित्वा सर्षपमात्राणि बीजानि कृत्वा राजान्तःपुरक्रीडा-सरसस्तटे परमनिगूढस्थाने भूपरिष्कारं कृत्वा बभाषे—'देव, क्षेत्रबीजे सम्पन्ने। वप्ता कश्चिद्दीयताम्।' राजोवाच—'त्वमेव किं न वपसि ?' चौर उवाच—'यदि सुवर्णवपने ममैवाधिकारो भवति तदा किमहं दुःखी भवामि। किन्तु सुवर्णवपने चौरस्याधिकारो नास्ति। येन कदापि किमपि न चोरितमस्ति स वपतु। देव एव किं न वपति ?'

राजोवाच—'मया चारणेभ्यो दातुं तातचरणानां धनं चोरितम्।'

चौर उवाच—'तर्हि मन्त्रिणो वपन्तु।'

मन्त्रिण ऊचुः—'वयं राजोपजीविनः कथमस्तेयिनो भवामः।'

चौर उवाच—'तर्हि धर्माधिकारी वपतु।'

धर्माध्यक्ष उवाच—'मयापि बाल्यदशायां मातुर्मोदकाश्चोरिताः।'

चौर उवाच—'यूयं सर्वेऽपि चौराः। कथमहमेव मारणीयोऽस्मि?'

तच्चौरवचनं श्रुत्वा सर्वे सभासदो जहसुः। राजापि हास्यरसापनीतक्रोधो विहस्याह—'चौर, न मारणीयोऽसि। हे मन्त्रिणः, कुबुद्धिरपि बुद्धिमानयं चौरः हास्यरसप्रवीणश्च। ततो ममैव सन्निधाने तिष्ठतु, प्रस्तावे मां हासयतु मोदयतु च।' ततः स चौरो राज्ञा स्वसन्निधाने धृतः।

न चौरादधमः कश्चित् स हि हासेन विद्यया।
मृत्युपाशं समुच्छिद्य राज्ञो वल्लभतां गतः॥ ३॥

❀ ❀ ❀

## सज्जनप्रशंसा

अहो किमपि चित्राणि चरित्राणि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते तद्भारेण नमन्त्यपि ॥१॥
अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥२॥
गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि ।
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥३॥
गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च घ्नन्ति सन्तो महाशयाः ॥४॥
नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च विरलः सरलो जनः ॥५॥
विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः ।
अधिष्ठितं महासर्पैश्चन्दनं न विषायते ॥६॥
सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् ।
असद्भिः शपथेनापि जले लिखितमक्षरम् ॥७॥

यथा चित्तं तथा वाचो यथा वाचस्तथा गिरः ।
चित्ते वाचि क्रियायाञ्च साधूनामेकरूपता ॥८॥

पात्रं पवित्रयति नैव गुणान् क्षिणोति
स्नेहं न संहरति नापि मलं प्रसूते ।
दोषावसानरुचिरश्चलतां न धत्ते
सत्सङ्गमः सुकृतसद्मनि कोऽपि दीपः ॥९॥

धवलयति समग्रं चन्द्रमा जीवलोकं
किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि ।
भवति विदितमेतत् प्रायशः सज्जनानाम्
परहितनिरतानामादरो नात्मकार्ये ॥१०॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥११॥

कस्यादेशात् क्षपयति तमः सप्तसप्तिः प्रजानां
छायाहेतोः पथि विटपिनामञ्जलिः केन बद्धः ।
अभ्यर्थ्यन्ते जललवमुचः केन वा वृष्टिहेतोः
जात्यैवैते परहितविधौ साधवो बद्धकक्ष्याः ॥१२॥

## कमलाकरोपाख्यानम्

गुरूपदेशं शृण्वन्तः क्षेमं यान्तीह बालकाः ।
गुरूपदेशादभवत् सर्वज्ञः कमलाकरः ॥

उज्जयिन्यां भट्टिर्नाम कोऽपि ब्राह्मण आसीत् । तस्य तनयः कमलाकरो नाम । एकपुत्रोऽसौ विप्रः कमलाकरे नितान्तं प्रेमवान् बभूव । किन्तु कमलाकरः प्रतिदिनमाकण्ठं भुञ्जानो वस्त्राभरणादिभिः शरीरमलङ्कृत्य विद्यापराङ्मुखो विषयोन्मुखश्चाभवत् । तथाविधं तमाहूय भट्टिः कदाचिदेवं दिदेश—

'पुत्र, स्वकर्मवशादयमात्मा नानायोनिषु जन्म लभते । कदाचित् सत्कर्मवशान् मनुष्ययोनिं प्रविशति । तत्रापि ब्राह्मणकुले जन्म महता पुण्येन लभ्यते । तल्लब्ध्वापि

त्वमेवं दुर्वृत्तोऽसि। सर्वदा बहिरेव सञ्चरसि। भोजन-काले केवलं गृहमागच्छसि। किञ्च, तवायं विद्याभ्या-सस्य कालः। इदानीं यदि विद्यां नाभ्यस्यसि तर्हि पश्चात्तव महान् संतापो भविष्यति।'

एवं पितुरुपदेशं श्रुत्वा पश्चात्तापपीडितः कमलाकरः 'यदाहं सर्वज्ञो भविष्यामि तदा पितृमुखं द्रक्ष्यामि' इति निश्चित्य काश्मीरदेशं जगाम। तत्र चन्द्रमौलिभट्टो नाम कोऽपि विद्वान् पण्डितोऽभूत्। तत्सकाशे वहवो विद्यार्थिनो विद्या-मभ्यस्यन्ति। इति श्रुत्वा कमलाकरस्तमुपसृत्य सविनयं प्रणम्य विज्ञापयतिस्म—'भोः स्वामिन्, मूर्खोऽहं भवतः सकाशाद् विद्यामभ्यसितुमागतोऽस्मि। प्रसीद, यथाहं सर्वज्ञो भवेयं तथा मामध्यापयितुमर्हसि—'इति।

भट्टोऽपि विनीतमेनं शिष्यं स्वीचकार, कमला-करश्च भक्त्या गुरुं शुश्रूषमाणः पपाठ। तथा च स्मृतिः—

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थान्नोपलभ्यते॥
यथा खनन् खनित्रेण नरो वार्यधिगच्छति।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥

एवमप्रमादं शुश्रूषया विद्याभ्यासपरे तस्मिन् गुरोर्महती प्रीतिरजायत। स सर्वाणि शास्त्राणि सम्यगध्यापयतिस्म। अन्ते च प्रसन्नः सिद्धसारस्वतं नाम रहस्यतमं मन्त्रं तस्मा उपदिदेश। तेन चोपदेशेन सर्वज्ञो भूत्वा कमलाकरः कृतार्थमात्मानं मन्यमानः पितृमुखं दिदृक्षुर्गुरोरनुज्ञामवाप्य स्वनगरं जगाम। तत्पितापि सर्वज्ञं पुत्रं ज्ञात्वा परां तुष्टिमगमत्।

❀ ❀ ❀

## समस्या

ततः प्रविशति पत्नीसहितः कोऽपि विलोचनो विद्वान्। 'स्वस्ति' इत्युक्त्वा प्राह—

'निजानपि गजान् भोजं ददानं वीक्ष्य पार्वती।
गजेन्द्रवदनं पुत्रं रक्षत्यद्य पुनः पुनः ॥ १ ॥'

ततो राजा भोजः सप्त गजांस्तस्मै ददौ।

ततो राजा विद्वत्कुटुम्बं तदैव पुरतः स्थितं वीक्ष्य ब्राह्मणं प्राह—

"क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे"

वृद्धद्विजः प्राह—

'घटो जन्मस्थानं मृगपरिजनो भूर्जवसनो
वने वासः कन्दादिकमशनमेवंविधगुणः।

अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥२॥'

ततो राजा बहुमूल्यान्यपि षोडश मणींस्तस्मै ददौ।
ततस्तत्पत्नीं प्राह—

'अम्ब! त्वमपि पठ—'

देवी—

'रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगाः
निरालम्बो मार्गश्चरणविकलः सारथिरपि।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥३॥'

राजा तुष्टः सप्तदश गजान् सप्त रथांश्च तस्यै ददौ।
ततो राजा विप्रसुतं प्राह—'विप्रकुमार! त्वमपि स्वकृतिं श्रावय।'

विप्रसुतः—

'विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यः रणभुवि सहायाश्च कपयः।
पदातिर्मर्त्योऽसौ सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥४॥'

तुष्टो राजा विप्रसुतायाष्टादश गजेन्द्रान् प्रादात्। ततः

सुकुमारावयवां शृङ्गाररसोपजातमूर्तिमिव विप्रसुतां वीक्ष्य राजा प्राह—'पुत्रि ! त्वमपि किमपि वद ।'

विप्रस्नुषा—'देव ! शृणु—

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥'

चमत्कृतो राजा लीलादेवीभूषणानि सर्वाण्यादाय तस्यै ददौ । अनर्घ्यांश्च सुवर्णमौक्तिकवैदूर्यप्रवालान् प्रददौ ।

❀ ❀ ❀

## आश्रमपदम्

धर्मरक्षितः—'सखे ब्रह्मदत्त, पश्यसीदं तद् आश्रमपदम् ?'

ब्रह्मदत्तः—'कथं न पश्यामि ? पश्यामि च नन्दामि च। धर्मरक्षित, के पुनरेते क्रीडन्ति ?'

धर्मरक्षितः—'आश्रमवटव एते।'

ब्रह्मदत्तः—'आश्रमवटव एते ! अहो प्रियमेषां दर्शनम् ! अयत्नरमणीयो वेशः, विनयमधुरश्च स्वभावः। सर्वथा सफलमिवेदानीं मे नयनम्। हन्त ! कथमेते खेलन्ति। एको धावति, अपरोऽनुधावति। एकः पतति, अन्ये हसन्ति। कश्चिच्चलति, अपरस्तिष्ठति। एके भ्रमन्ति, अपरे गायन्ति। तद् मनोज्ञम्, अतिमनोज्ञं दर्शनमिदम्। धर्मरक्षित, अग्रतस्तावद् गच्छावः।'

धर्मरक्षितः—'जिघ्रसि ब्रह्मदत्त, कथमेष सुरभिर्होमगन्धः सर्वत उद्गच्छति? एते हरिणशिशवो निरुद्वेगाः पश्यन्ति च, धावन्ति च, क्रीडन्ति च। एते मयूराश्चरन्ति। इमाश्चात्र होमधेनवः पर्यटन्ति। एते शुकशावका अन्ये चानेके विहङ्गमाः कूजन्ति।'

ब्रह्मदत्तः—'सखे, इतोऽपीयं रमणीयोल्लसति तरुवीथिः। एतानि प्रस्फुटितानि प्रसूनानि। गुञ्जन्ति चैते मधुलोलुपा मधुकराः।'

धर्मरक्षितः—'ब्रह्मदत्त, अत्राप्यवलोकयावः। एते परिभ्रमन्ति ब्रह्मचारिणः। आहरन्ति चैते कुशं, पुष्पं, समिधश्च। एते हि परिचरन्ति आचार्यान्, न तु दुर्जनान्; आचरन्ति सदाचारान् न तु स्वेच्छाचारान्; परिहरन्त्यविनयं, न तु विनयम्; त्यजन्ति हिंसां, न तु दयाम्; वदन्ति सत्यं, न त्वनृतम्; संयच्छन्ति चेन्द्रियाणि, न तु निरपराधान्। केचिद् ब्रह्मचारिणो वेदान् पठन्ति, केचित् सामानि गायन्ति, केचित्तर्कमालोचयन्ति, केचद्वेदान्तमनुशीलयन्ति, केचिच्चापरां विद्यां चर्चयन्ति।'

ब्रह्मदत्तः—'एते चात्र गृहस्था मुनयः आगतानतिथीन् पूजयन्ति। अये किमेष महाभाग आवामाह्वयति ? किं कथयसि भगवन्, "युवामतिथी, तद् ग्रहणीयोऽयं सत्कार इति" साधु भगवन् साधु। नूनं प्रभूतं नः सुकृतं, यद्भवादृशा अप्यस्मानाह्वयन्ति। तदिमौ गच्छावः।'

धर्मरक्षितः—'अपि त्वमवगच्छसि ब्रह्मदत्त, यदेते गृहमेधिनो न तावद्भक्षयन्ति, यावन्न भक्षयन्ति अतिथय इति ?'

ब्रह्मदत्तः—'अपि सत्यमिदम् ?'

धर्मरक्षितः—'किमसत्यमहं कथयामि ?'

ब्रह्मदत्तः—'अहो महानेषां धर्मभावः ?'

धर्मरक्षितः—'यो जनः केवलमात्मार्थमन्नं पचति निजोदरमेव पूरयति, नायमन्नकवलं खादति, अपितु पापकवलमेव, इति हि धर्मशास्त्राणि वदन्ति।'

ब्रह्मदत्तः—'चारुतरं पवित्रतरं चेदम्। अथ धर्मरक्षित, इमे पुनः के ?'

धर्मरक्षितः—'एते वानप्रस्थाः। ईश्वरलाभ इति वा, मुक्तिरिति वा परमः पुरुषार्थः, तदर्थमेते साम्प्रतं त्यक्तगृह-

वासाः पुण्यमरण्यमाश्रयन्ति, तपांसि चरन्ति, कथञ्चित् शरीरं धारयन्ति, सेवन्ते च भगवन्तम् । इतश्चामी सन्न्यासिनो मुनयः, एते हि छिन्ननिखिलसम्बन्धा भगवन्तं ध्यायन्ति ।'

ब्रह्मदत्तः—'भद्रं ते सखे धर्मरक्षित, ईश्वर इति, भगवान् इति च यत् त्वं कथयसि, तत्रापि मे प्रश्नः—कोऽयमीश्वरः ? को वायं भगवान् ? कस्तं पश्यति, अनुभवति वा ?'

धर्मरक्षितः—'ब्रह्मदत्त, अतिगम्भीरोऽयं ते प्रश्नः । दुरूहमस्य प्रतिवचनम् । तथापि किञ्चित् कथयामि । किं त्वं वदसि ब्रह्मदत्त, किमिदं ते वसनं स्वयमुत्पन्नम्, उताहो वर्तते कश्चिदस्य कर्ता ?'

ब्रह्मदत्तः—'कथं स्वयमुत्पन्नं ? ननु तन्तुवायोऽस्य कर्ता।'

धर्मरक्षितः—'अथ यदिदं ते कनकाङ्गुरीयकं, किमिदं स्वयमुत्पन्नमुताहो अस्यापि कश्चित् कर्ता वर्तते ?'

ब्रह्मदत्तः—'वर्ततेऽस्यापि कर्तेति प्रसिद्धमेव । ततः किम्?'

धर्मरक्षितः—'तत इदं भवति, यत् सर्वस्यापि कार्यस्य कश्चित् कर्ता भवतीति । नैतदेवम् ?'

ब्रह्मदत्तः—'एवमेव, कः सन्देहः ।'

धर्मरक्षितः–'अथ यदिदं जगद्रूपं कार्यम्, नूनमस्यापि कश्चित् कर्ता वर्तते। किं त्वं वदसि ब्रह्मदत्त ?'

ब्रह्मदत्तः–'किमन्यद् वदामि। ध्रुवं वर्तत एव।'

धर्मरक्षितः–'किमयं कर्ता त्वं वा, अहं वा, अयं वा, असौ वा कश्चित् ?'

ब्रह्मदत्तः'हन्त भो नैतादृशः कश्चित् तस्य कर्ता सम्भवति। न पुनरवगच्छामि कः स इति।'

धर्मरक्षितः—'ब्रह्मदत्त, अयमेव ईश्वर इति वा, भगवान् इति वा प्रसिद्धः। एष एव विश्वं रचयति, पालयति, संहरति च। भक्ता एव चैनं पश्यन्ति।'

ब्रह्मदत्तः—'साधु, सखे धर्मरक्षित, साधु! हृदयङ्गमं ते वचनम्। चिरं स्मरणीयमिदम्।'

धर्मरक्षितः—'तत् सखे साम्प्रतं गृहमेव गच्छावः।'

ब्रह्मदत्तः—'अथ किम्? अहमपि तदेव कथयामि।'

❀ ❀ ❀

## दुर्जननिन्दा

नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् ।
तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ १ ॥

गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते ।
पुष्पे फले विरागी क्रमेलकः कण्टकौघमिव ॥२॥

वृथा ज्वलितकोपाग्नेः परुषाक्षरवादिनः ।
दुर्जनस्यौषधं नास्ति किञ्चिदन्यदनुत्तरात् ॥३॥

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥४॥

खलानां कण्टकानां वा द्विविधैव प्रतिक्रिया ।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥५॥

अयःपिण्ड इवोत्तप्ते खलानां हृदये चणात् ।
पतिता अपि नेक्ष्यन्ते गुणास्तोयगणा इव ॥६॥

खलो न साधुतां याति सद्भिः सम्बोधितोऽपि सन् ।
सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥७॥

पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते ।
सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥८॥

अहो प्रकृतिसादृश्यं श्लेष्मणो दुर्जनस्य च ।
मधुरैः कोपमायाति कटुकेनैव शाम्यति ॥९॥

धूमः पयोधरपदं कथमप्यवाप्य
वर्षाम्बुभिः शमयति ज्वलनस्य तेजः ।
दैवादवाप्य कलुषप्रकृतिर्महत्वम्
प्रायः स्वबन्धुजनमेव तिरस्करोति ॥१०॥

कस्त्वं भद्र ? खलेश्वरोऽहमिह किं घोरे वने स्थीयते ?
शार्दूलादिभिरेव हिंस्रपशुभिः खाद्योऽहमित्याशया ।
कस्मात् कष्टमिदं त्वया व्यवसितं ? मद्देहमांसाशिनः
प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान् नरान् ॥११॥

संवर्धितोऽपि भुजगः पयसा न वश्यः
तत्पालकानपि निहन्ति बलेन सिंहः ।
दुष्टः परैरुपकृतस्तदनिष्टकारी
विश्वासलेश इह नैव खले विधेयः ॥१२॥

# विशाखोपाख्यानम्

आसीत् पृथुर्नाम राजा। स चैकदा सुलोचनया नाम प्रियया सह मृगयादर्शनकौतुकेन रथमारुह्य पुरान्निश्चक्राम। ततो वनं प्राप्य सर्वस्मिन् सैन्य इतस्ततो मृगान्वेषणाय निर्गते, राजा मनुष्यबालकमेकं शुभलक्षणं दिव्याम्बर-खण्डोपरि शयितं ददर्श। दृष्ट्वा च महिषीमभाषत—'प्रिये! पश्याश्चर्यम्। कुतोऽत्रारण्ये सिंहव्याघ्राकुले मनुष्य-बालकप्रचारः?'

देव्युवाच—'पूर्णचन्द्रमिव सुमुखं बालकमिमं दृष्ट्वा मम हृदयं करुणार्द्रं जायते। यदि प्रभोराज्ञा भवति तदैतं बालकं गृहीत्वा पुत्रप्रेम्णा परिपालयामि।'

राजा सरोषमाह—'कथमेनमज्ञातमातृपितृकं क्रोडे करिष्यसि? एवं कृते लोकनिन्दा दुर्निवारा।'

देव्युवाच–'देव, पुरुषोऽनिंद्यो भवति। तथा च–

दशा विनिन्द्या पुरुषो न निन्द्यो
रत्नप्रसूः पुत्रगुणेन नारी।
न ज्ञायते कस्य ललाटपट्टे
विराजते किं लिखितं विधात्रा ॥ १॥

न चोच्चकुलादन्यत्र जातस्य कान्तिरीदृशी सम्भवति।' स्वभावाद् आज्ञाभङ्गासहा एव राजानः, महिष्यश्च सौभाग्यमदगर्विता भवन्ति। ततः परस्परं कलहे सति राजा तां प्रति चुकोप, रथाच्चावतारयामास। सैन्यं चादिदेश–'यः कश्चन मन्दभाग्यां नीचानुरागिणीमेनामनुसरिष्यति यं चैषानुयास्यति तस्याहं रिपोरिव शिरश्छेदं विधास्यामि।'

ततः सकलसैन्यसहिते तस्मिन् भूपाले परावृत्य पुरं गते, सा राज्ञी तं बालकं शयनीयवस्त्रसमेतं क्रोडे कृत्वा स्वभूषणान्यवतार्य काञ्चिद् दिशमुद्दिश्य चलितवती। अनतिदूरमेव सा ब्रह्मपुरमेकं प्राप्य तत्र चैकां करुणावतीं धार्मिकस्वभावां ब्राह्मणीं दृष्ट्वा प्रणम्योवाच–'भगवति! दरिद्रवधूरहं सपत्न्या खेदिता त्वामाश्रित्य जीवितुमिच्छामि।'

ब्राह्मण्युवाच—'न त्वं दरिद्रवधूः, किन्तु लक्षणैः राजपत्नीव प्रतीयसे।'

ततस्तामाश्रित्य तं बालकं पुपोष, यथाविधि विशाख इति च नाम चकार। विशाखस्तु तया पोष्यमाणः क्रमेण यौवनदशां प्राप्तः। स चैकदा देवीं पप्रच्छ—'मातः! किं मम पितुर्नाम?'

देव्युवाच—'नाहं जानामि।'

विशाखोऽब्रवीत्—'त्वं मम माता, त्वमपि मम पितुर्नाम न जानासि, तदा सार्थनामैवाहं विशाखः। किं करिष्याम्यविज्ञातपितृकः। किमर्थमहं जीविष्यामि? यतः पुत्रे जाते पिता नन्दति, मयि जाते को नन्देत्? पुत्रो जातः पितरं तर्पयति, अहं जातः कं तर्पयामि? तदफलं मम जीवितमिति' विलपन् मुक्तकण्ठं रुरोद।

तं रुदन्तमवलोक्य करुणार्द्रहृदया महिषी सर्वं पूर्ववृत्तान्तं कथयामास, उवाच च—'पुत्र! अयं मम वृत्तान्तः।'

विशाख उवाच—'मातः! कथमहमेव तव दुर्दशायाः कारणम्? महती प्रत्याशा तव विद्यते मयि। तदिमांस्त्यागार्हानपि प्राणान् न परित्यक्ष्यामि। तव प्रत्याशापूरणाय

जीविष्यामि । तन्निरूपयामि कुतो मम जन्म ।'

ततस्तया देव्या नीयमानस्तत्र गत्वा तदरण्यं सकलं बभ्राम। भ्रमंश्च तत्र सरोवरोपकण्ठे सुखासीनं तपःशीलनामानमृषिं ददर्श । तमुपगम्य प्रणम्याह—'भगवन् प्रसीद।'

ऋषिरुवाच—'कस्त्वं, किमर्थमत्रागतोऽसि ?'

विशाखस्तु तं सकलवृत्तान्तं निवेदयामास ।

ऋषिरुवाच—'कुमार ! यदि तत्समयशयनीयवस्त्रखण्डं त्वया प्राप्यते, तदा तव पिता माता च ज्ञायते ।'

ततो देव्याः सकाशादानीय तद्वस्त्रखण्डं दर्शितवान् । उभे अपि निरूप्यमाणे एकस्यैव वस्त्रस्य खण्डे निश्चित्य मुनिः सलज्जमवोचत्—'शृणु कुमार ! वृत्तान्तम् । मया महत्तपः कर्तुं प्रारब्धम् । तेन तपसा शक्रः शङ्काकुलितो बभूव यदयमिन्द्रपदं ग्रहीष्यतीति । ततो मम तपोभङ्गनिमित्तं तिलोत्तमानाम्नीं विद्याधरीं प्रस्थापयामास । त्वं च तस्यां मम पुत्रः । तिलोत्तमा मम तपोभङ्गेन कृतार्था स्वकीयपरिधानवस्त्रं द्विधा कृत्वा प्रत्यभिज्ञानार्थमर्धमिदं मह्यं दत्तवती । द्वितीयमर्धमिदं शय्यां कृत्वा तत्र च त्वां शाययित्वा वस्त्रान्तरं परिधाय स्वर्गं जगाम ।'

कुमारस्तु श्रुत्वेमं वृत्तान्तं देवकन्याया मुनेश्च पुत्रोऽह-मिति परमहर्षितो बभूव ।

मुनिरपि तुष्टस्तस्मै वरं ददौ—'त्वं प्रतिभया प्रगल्भो भव । यत् कथयिष्यसि तत्सर्वेऽङ्गीकरिष्यन्ति इति ।'

वरमेतमासाद्य तेनैव पथा सुलोचनया सह पृथोर्नगर-माजगाम । तत्र च कस्यापि गृहे सुलोचनां गुप्तामवस्थाप्य स्वयं सेवकमुद्रया राजानमुपगम्य तस्य सेवापरायणो बभूव। क्रमेण स स्वप्रतिभावशात् पृथोः प्रतीहारो बभूव। प्रतीहार-पदव्यां वर्तमानः प्रभावेणोपकारेण दानेन च सकलमपि राज्यसुभटचक्रं वशमानीय सुलोचनां बभाषे—'मातः! कथय मनोरथं किं ते करवाणि ?'

देव्युवाच—'पुत्र ! यदि शक्नोषि तदा पृथुराजं श्रृङ्खलाभिः संयम्य मे देहि ।'

विशाख उवाच—'मम लीलासाध्यमेवेदं कर्म ।'

ततः प्रभाते त्रिचतुरैः निजानुरक्तैः पुरुषैः श्रृङ्खलाहस्तैः सह खड्गहस्तः पृथोः सभावसरे सर्वान् प्रत्याह—'रे रे सभासदः ! वः सर्वान् विज्ञापयामि—सर्वे यूयं मया सह कृतसन्धाना एव । युष्माकमेक एव पुरुषो न सहितः,

स चात्मानं परिचिनोत्येव। स यदि हस्तपादं चालयिष्यति तदा मयानेन खड्गेनाविलम्बितमेव हन्तव्यः। साम्प्रतमहं राजानं बध्नामि।' ततः श्रृङ्खलया राजानं संयम्य सिंहासनादवतारयामास। सभासदस्तु स्वस्वातिरिक्तान् परस्परं कृतसन्धानानवगत्य केऽपि शस्त्राणि न व्यापारयामासुः। वस्तुतस्तु सर्वेऽकृतसन्धाना एव: एवं विशाखो राजा बभूव।

तदनन्तरं संयतं पृथुं सुलोचनायाः पुरो निनाय। तं दृष्ट्वा परमहृष्टा सुलोचनोवाच—'कच्चिन्मां परिचिनोति देवः?'

राजोवाच—'परिचिनोमि त्वां विजपत्नीम्।'

सुलोचनोवाच—'विशाखः परिचीयते देवेन?'

राजोवाच—'विशाखं नैव जानामि।'

देव्युवाच—'यमुद्दिश्य पठितम्—

दशा विनिन्द्या पुरुषो न निन्द्यो
रत्नप्रसूः पुत्रगुणेन नारी।
न ज्ञायते कस्य ललाटपट्टे
विराजते किं लिखितं विधात्रा॥

स एवायं शिशुरिदानीमेतावतीं पुरुषतां प्राप्तो येन

देवोऽपि बद्धोऽस्ति।' इत्यभिधाय स राजा तया महिष्या प्रणिपत्य तस्मिन्नेव राज्ये राजा कृतः। विशाखस्तु तस्मिन्नेव राज्ञि दर्शितभक्तिस्तस्य युवराजो बभूव।

स एवायं विशाखो यस्य कृतिः मुद्राराक्षसं नाम नाटकमधुनापि प्रचरति धरणीतले।

❀ ❀ ❀

## परीक्षिच्चरित्रम्

आसीत् पञ्चसु पाण्डवेषु मध्यमोऽर्जुनो नाम। तस्य भार्या सुभद्रा श्रीकृष्णभगिनी। तत्पुत्रोऽभिमन्युः। स षोडशवर्षदेशीय एव भारतयुद्धेऽनेकान् शत्रूनवधीत्। तत्पराक्रममसहमाना द्रोणकर्णजयद्रथाः प्रत्येकं प्रत्येकं तं जेतुमसमर्थाः सन्तः मिलित्वा तमधर्मेण जघ्नुः। तदानीं तद्भार्या विराटराजपुत्र्युत्तरान्तर्वत्न्यासीत्।

नियतसमयानन्तरं सा पुत्ररत्नमजनयत्। युधिष्ठिरः तस्य शिशोः परीक्षिदिति नाम चकार। स उत्तरकुमारस्य तनयामिरावतीमुपयेमे। तस्यान्तस्य जनमेजयाद्याश्चत्वारः तनया जाताः।

स परीक्षिदेकदा मृगयायै वनं गतो मृगमेकमनुससार। स चार्धविद्धः प्राद्रवत्। परीक्षित्तस्य पृष्ठतो दूरं धावित्वापि

तं मृगमलभमानः पिपासार्तः कुत्रापि जलाशयं नापश्यत्। तत्रैव पार्श्वे निमीलिताक्षं ध्यानमग्नं मौनव्रतधरं शमीकनामर्षिं ददर्श। दृष्ट्वा चाचिन्तयत्—'एष ऋषिर्मह्यं पानीयं दास्यति,' इति मत्वा--'ब्रह्मन्, अहं पाण्डवानां प्रपौत्रः परीक्षिन्नाम चक्रवर्ती। आखेटे मया विद्धो मृगो धावन्नत्रागतः। अहञ्च तमनुधावन् पिपासाकुलः सञ्जातः। विशुष्यत्तालवे मह्यं जलं दीयतां भवता—'इत्यवदत्।

समाधौ स्थितः स मुनिः किञ्चिदपि न प्रत्युवाच। तस्य मौनावलम्बनेन सञ्जातकोपः परीक्षिन्नृपः दूरे पतितं मृतमुरगं धनुष्कोट्योद्धृत्य मुनेरंसे क्षिप्त्वा प्राचलत्।

तस्य महर्षेः सुतोऽतितेजस्वी शृङ्गी नाम तदानीं पार्श्वे एव समवयस्कैः मुनिकुमारैः क्रीडन्नास्त। स तातं तथावमानितं दृष्ट्वा कोपरक्तनेत्रः—'वृद्धस्य तपस्यभिरतस्य मम पितुः कण्ठे यः क्षत्रियापसदो मृतं सर्पमसृजत् तमेवातः सप्तमेऽहनि सर्पराट् तक्षकः दशतु—' इति शशाप।

तदानीमेव तत्पिता समाधेरुत्थितः स्वतनयमुखात् सर्वमेव शापवृत्तमज्ञासीत्। शमीकः पुत्रं विनिन्द्य गौरमुखनाम्नः स्वशिष्यस्य मुखेन शापवृत्तान्तं राज्ञे निवेदयामास।

अत्रान्तरे राजर्षिशिष्यात् शृङ्गिदत्तं शापं श्रुत्वात्मानमपराधिनं मन्वानो भृशं पर्यतप्यत। पुत्रं जनमेजयञ्च राज्येऽभिषिच्य यावच्छक्यमात्मोपायं कर्तुं प्रवृत्तः। गङ्गातटे प्रासादमेकमेकस्तम्भं सपैरप्रवेश्यं कारयित्वा स्वयं च तत्रोपविश्यात्मरक्षणाय विषवैद्यान् मन्त्रसिद्धान् द्विजांश्चानाययामास। तत्रैव राज्ञस्तत्त्वोपदेशार्थमागतेन व्यासपुत्रेण शुकाचार्येण द्वादशस्कन्धात्मकं श्रीमद्भागवतं सप्तसु दिवसेषूपदिष्टम्।

ऋषिशापप्रचोदितस्तक्षकः सप्तमेऽहनि कतिपयैर्नागैर्युतः परीक्षितं दष्टुं विप्रवेषेण समाययौ। दैवात्तेन धनाशया राजानं निर्विषं कर्तुं गच्छन् कश्चन मन्त्रसिद्धः ब्राह्मणो वर्त्मनि दृष्टः। तस्य मन्त्रशक्तिमात्मना दष्टे वृक्षेऽपराभूतां विज्ञाय तस्मै सुप्रभूतं धनं दत्त्वा तमर्धवर्त्मन्येव प्रतिनिवर्तितवान्। राजप्रासादमुपगम्यासावात्मसहचरान् भुजङ्गमान् तापसरूपान् विधाय तेषामेव हस्ते उपायनत्वेन दातव्येषु फलेष्वात्मानं कृमिरूपेणागोपयत्।

गृहीतफल एव राजनि तक्षकः प्राकृतरूपं विधाय तमदशत्। विषवृद्ध्या मूर्छितोऽसौ क्षणेनैव पञ्चत्वमवाप। परीक्षिति मृते तस्यात्मजः जनमेजयः भारतसम्राड् बभूव।

## दान-माहात्म्यम्

यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने।
तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥१॥
भवन्ति नरकाः पापात्पापं दारिद्र्यसम्भवम् ।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥२॥
ग्रासादर्धमपि ग्रासमर्थिभ्यः किं न यच्छसि ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥३॥
गौरवं प्राप्यते दानान्नतु वित्तस्य सञ्चयात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥४॥
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥५॥
आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥६॥

उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥७॥

दानेन भूतानि वशीभवन्ति
दानेन वैराण्यपि यान्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दानै-
र्दानं हि सर्वव्यसनानि हन्ति ॥८॥

तुरगशतसहस्रं गोगजानाञ्च लक्षं
कनकरजतपात्रं मेदिनीं सागरान्ताम् ।
विमलकुलवधूनां कोटिकन्याश्च दद्यात्
नहि नहि सममेतैरन्नदानं प्रधानम् ॥९॥

देयं भो ह्यधने धनं सुकृतिभि-
र्नो सञ्चितं सर्वदा
श्रीकर्णस्य बलेश्च विक्रमपते-
रद्यापि कीर्त्तिः स्थिता ।
आश्चर्यं मधु दानभोगरहितं
नष्टं चिरात्सञ्चितं
निर्वेदादिति पाणिपादयुगलं
घर्षन्त्यहो मक्षिकाः ॥१०॥

# दूतवाक्यम्

( सूत्रधारः प्रविशति )

( नेपथ्ये )

भो भोः प्रतिहाराधिकृताः ! महाराजो दुर्योधनः समाज्ञापयति ।

सूत्रधारः—भवतु, विज्ञातम्—

उत्पन्ने धार्तराष्ट्राणां विरोधे पाण्डवैः सह ।
मन्त्रशालां रचयति भृत्यो दुर्योधनाज्ञया ॥१॥

( निष्क्रान्तः )

( ततः प्रविशति काञ्चुकीयः )

काञ्चुकीयः—भो भोः प्रतिहाराधिकृताः ! महाराज

दुर्योधनः समाज्ञापयति—अद्य सर्वपार्थिवैः सह मन्त्रयितु-मिच्छामि, तदाहूयन्तां सर्वे राजान इति।

(परिक्रम्यावलोक्य) अये ! अयं महाराजो दुर्योधन इत एवाभिवर्तते।

( ततः प्रविशति दुर्योधनः )

काञ्चुकीयः—जयतु महाराजः, महाराजशासनात् समानीतं सर्वं राजमण्डलम्।

दुर्योधनः—सम्यक् कृतम्। प्रविश त्वमवरोधनम्।

काञ्चुकीयः—यदाज्ञापयति महाराजः। (निष्क्रान्तः)

दुर्योधनः—आर्यौ ! वैकर्णवर्षदेवौ ! उच्यताम्—अस्ति ममैकादशाक्षौहिणीबलसमुदायः। अस्य कः सेनापति-र्भवितुमर्हति ?

किमाहतुर्भवन्तौ—अत्रभवति गाङ्गेये स्थिते कोऽन्यः सेनापतिर्भवितुमर्हति ? भवतु, भवतु। पितामह एव भवतु।

( प्रविश्य )

काञ्चुकीयः—जयतु महाराजः। एष खलु पाण्डव-स्कन्धावाराद्दौत्येनागतः पुरुषोत्तमो नारायणः।

दुर्योधनः—मा तावद्भो बादरायण ! किं किं कंस-

भृत्यो दामोदरस्तव पुरुषोत्तमः! स गोपालकस्तव पुरुषोत्तमः! आ अपध्वंस।

काञ्चुकीयः—प्रसीदतु प्रसीदतु महाराजः। दूतः प्राप्तः केशवः।

दुर्योधनः—केशव इति भोः सम्यगुक्तमिदानीम्। भो भो राजानः। योऽत्र केशवस्य प्रत्युत्थास्यति स मया द्वादशसुवर्णभारेण दण्ड्यः।

दुर्योधनः—बादरायण! आनीयतां स विहगवाहन-मात्रविस्मितो दूतः।

काञ्चुकीयः—यदाज्ञापयति महाराजः।

दुर्योधनः—वयस्य कर्ण—

प्राप्तः किलाद्य वचनादिह पाण्डवानाम्
दौत्येन भृत्य इव कृष्णमतिः स कृष्णः।
श्रोतुं सखे! त्वमपि सज्जय कर्ण! कर्णौ
नारीमृदूनि वचनानि युधिष्ठिरस्य॥ २॥

(ततः प्रविशति वासुदेवः काञ्चुकीयश्च)

वासुदेवः—(प्रविश्य) कथं कथं मां दृष्ट्वा संभ्रान्ताः सर्वक्षत्रियाः! अलमलं सम्भ्रमेण, स्वैरमासतां भवन्तः।

दुर्योधनः—कथं केशवं दृष्ट्वा सम्भ्रान्ताः सर्वे क्षत्रियाः ? अलमलं सम्भ्रमेण । स्मरणीयः पूर्वमाश्रावितो दण्डः ।

( वासुदेवं प्रति ) भो दूत ! एतदासनमास्यताम् ।

वासुदेवः—आचार्य ! आस्यताम् । गाङ्गेयप्रमुखा राजानः ! स्वैरमासतां भवन्तः, वयमप्युपविशामः । ( उपविशन्ति सर्वे )

दुर्योधनः—भो दूत !

धर्मात्मजो वायुसुतश्च भीमो
भ्रातार्जुनो मे त्रिदशेन्द्रसूनुः ।
यमौ च तावश्विसुतौ विनीतौ
सर्वे सभृत्याः कुशलोपपन्नाः ? ॥३॥

वासुदेवः—सदृशमेतद् गान्धारीपुत्रस्य । कुशलिनः सर्वे । भवतो राज्ये शरीरे च कुशलमनामयं च पृष्ट्वा विज्ञापयन्ति युधिष्ठिरादयः पाण्डवाः—

अनुभूतं महद् दुःखं संपूर्णः समयः स च ।
अस्माकमपि धर्म्यं यद् दायादं तद् विभज्यताम् ॥४॥

दुर्योधनः—कथं कथं दायादमिति ? भोः—

वने पितृव्यो मृगयाप्रसङ्गतः
कृतापराधो मुनिशापमाप्तवान् ।
तदा प्रभृत्येव स दारनिस्पृहः
परात्मजानां पितृतां कथं व्रजेत् ? ॥५॥

वासुदेवः—पुराविदं भवन्तं पृच्छामि—

विचित्रवीर्यो विषयी विपत्तिम्
क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष
लभेत राज्यं जनकः कथं ते ? ॥६॥

एवं परस्परविरोधविवर्धनेन
शीघ्रं भवेत् कुरुकुलं नृप ! नामशेषम् ।
तत् कर्तुमर्हति भवानपकृष्य रोषम्
यत्त्वां युधिष्ठिरमुखाः प्रणयाद् ब्रुवन्ति ॥७॥

अतः—

कर्तव्यो भ्रातृषु स्नेहो विस्मर्तव्या गुणेतराः ।
सम्बन्धो बन्धुभिः श्रेयान् लोकयोरुभयोरपि ॥८॥

दुर्योधनः—

देवात्मजैर्मनुष्याणां कथं वा बन्धुता भवेत् ।

पिष्टपेषणमेतावत् पर्याप्तं छिद्यतां कथा ॥९॥

वासुदेवः—भो दुर्योधन ! न जानीषेऽर्जुनस्य पराक्रमम् ? शृणु—

कैरातं वपुरास्थितः पशुपतिर्युद्धेन सन्तोषितो
वह्नेः खाण्डवमश्नतः सुमहती वृष्टिश्शरैश्छादिता ।
देवेन्द्रार्तिकरा निवातकवचा नीताः क्षयं लीलया
नन्वेकेन तदा विराटनगरे भीष्मादयो निर्जिताः ॥१०॥

अपि च, तवापि प्रत्यक्षमपरं कथयामि—

ननु त्वं चित्रसेनेन नीयमानो नभस्तलम् ।
विक्रोशन् घोषयात्रायां फाल्गुनेनैव मोचितः ॥११॥

किं बहुना,

दातुमर्हसि मद्वाक्याद् राज्यार्धं धृतराष्ट्रज ।
अन्यथा सागरान्तां गां हरिष्यन्ति हि पाण्डवाः ॥१२॥

दुर्योधनः—कथं कथम् ! हरिष्यन्ति हि पाण्डवाः ।

प्रहरति यदि युद्धे मारुतो भीमरूपी
प्रहरति यदि साक्षात् पार्थरूपेण शक्रः ।
परुषवचनदक्ष त्वद्वचोभिर्न दास्ये
तृणमपि पितृभुक्ते वीर्यगुप्ते स्वराज्ये ॥१३॥

वासुदेवः—एवमेवास्तु । न वयमनुक्तसन्देशा गन्तुमिच्छामः । तदाकर्ण्यतां युधिष्ठिरस्य सन्देशः—

शठ ! बान्धवनिस्नेह ! काक ! केकर ! पिङ्गल !
त्वदर्थात् कुरुवंशोऽयमचिरान्नाशमेष्यति ॥१४॥

भो भो राजानः, गच्छामस्तावत् ।

दुर्योधनः—कथं यास्यति किल केशवः ? दुःशासन ! दुर्मर्षण ! दुर्मुख ! दुर्बुद्धे ! दुष्टेश्वर ! केशवो बध्यताम् । कथमशक्ताः ? दुःशासन ! न समर्थः खल्वसि ? मातुल ! त्वयैव बध्यतां केशवः । न कोऽपि शक्तः ? भवत्वहमेव बध्नामि । ( पाशमुद्यम्योपसर्पति )

वासुदेवः—कथं भवितुकामो मां किल दुर्योधनः ? भवत्वस्य सामर्थ्यं पश्यामि ( विश्वरूपमास्थितः ) ।

दुर्योधनः—भो दूत !

सृजसि यदि समन्ताद् देवमायाः स्वमायाः,
प्रहरसि यदि वा त्वं दुर्निवारैः सुरास्त्रैः ।
हयगजवृषभाणां पातनाज्जातदर्पो
नरपतिगणमध्ये बध्यसे त्वं मयाद्य ॥१४॥

आः तिष्ठेदानीम् । कथं न दृष्टः केशवः ? अयं केशवः ।

अहो ह्रस्वत्वं केशवस्य! आः तिष्ठेदानीम्। कथं न दृष्टः केशवः? अयं केशवः। अहो दीर्घत्वं केशवस्य। कथं न दृष्टः केशवः! अयं केशवः। सर्वत्र मंत्रशालायां केशवा भवन्ति। किमिदानीं करिष्ये? भवतु दृष्टम्। भो भो राजानः! एकेनैकः केशवो बध्यताम्। कथं स्वयमेव पाशैर्बद्धाः पतन्ति राजानः। साधु भो जम्भक! साधु!

मत्कार्मुकोदरविनिःसृतबाणजालैर्
विद्धं क्षरत्क्षतजरञ्जितसर्वगात्रम्।
पश्यन्तु पाण्डुतनयाः शिविरोपनीतम्
त्वां बाष्परुद्धनयनाः परिनिश्वसन्तः॥१५॥

( निष्क्रान्तः )

वासुदेवः—यावदहमपि पाण्डवशिविरमेव यास्यामि।

( इति निष्क्रान्तः )

❀ ❀ ❀

## कृपणकथा

न ददाति न चाश्नाति धनं रक्षति जीववत् ।
प्रातस्स्मरणीयत्वात् कृपणः कस्य नाप्रियः ॥ १ ॥

आसीन्मथुरायां गूढधनो नाम वैश्यः । स च कालान्तरे वाणिज्यादिभिर्वतुलीकृतवित्तः परमकृपणो बभूव । एकदा तु दुर्भिक्षे प्रत्यासन्ने चिन्तितवान्—'यदस्मिन् दुर्भिक्षे मम वित्तानि पुत्रकलत्रादिभिः खादयितव्यानि, मया च धनशोकेन मर्त्तव्यम् । तन्न भद्रम् । यतः—

एकाकी पुरुषः श्रीमान् धनं तस्य परं सुहृत् ।
अन्ये च सुहृदः सर्वे धनमूलं कुटुम्बकम् ॥२॥

तदनागतावेक्षां करोमि । परालक्ष्यस्थाने वित्तानि धारयामि' इति विमृश्य तथा कृतवान् । ततो दुर्भिक्षे स परिवारान् सर्वानन्नेन विना म्रियमाणान् पश्यन्नपि कस्मैचित्

किमपि न ददौ । किञ्च परिवारैः कण्ठगतप्राणैर्याच्यमान इदं पद्यं पपाठ—

'कृपणस्य धनं प्राणाः प्रार्थयद्भिश्च तन्मम ।
प्राणाः किं नैव गृह्यन्ते यतो न स्युर्धने शुचः ॥३॥'

ततस्तस्य पुत्रकलत्रादयः सर्वे विनान्नेनैव मृताः । स्वयं च प्राणमात्रावशेषः परामृष्टवान्—

'यन्न पुत्रकलत्रेभ्यो दत्तं वित्तं मयार्जितम् ।
तन्निजप्राणरक्षार्थं कथं भोक्ष्ये निराकुलः ॥४॥'

ततः स्वप्राणरक्षायामपि न वित्तं विनियुङ्क्ते । उपवासेन दिनानि गमयन्तं तमतिदुर्बलं दृष्ट्वा तन्नगरवासिनः कारुणिकाः पुरुषाः कतिचित् प्रोचुः—हे कृपण, किं करिष्यसि तेन धनेन ? विद्यमानेऽपि धने निजप्राणान्नश्यतोऽनुमन्यसे । अथवोचितमेवैतत् । यतः—

अर्जने लभते खेदं गते शोकं च विन्दति ।
नाप्नोति कृपणो वित्ते दानभोगभवं सुखम् ॥५॥'

अपि च—

दीयते न यदुत्साहाद् भुज्यते यन्न कामतः ।
तद्धनं ह्यतिदुःखार्थं खेदार्थं चापि चिन्वतः ॥६॥

गूढधन उवाच—'अयि नगरवासिनः पुरुषाः ! किमपि कुरुत। मया प्राणव्ययेनापि धनव्ययो न स्वीक्रियते।' त ऊचुः—'तर्हि राज्ञा चौरेण वा ग्रहीतव्यं त्वयि विपन्ने तद्धनम्।' गूढधन उवाच—'अन्यस्यैव बुद्धिविहीनस्य धन-मन्ये गृह्णन्ति। मया स्वकीयधनं गले बद्ध्वा मर्त्तव्यम्।' इत्यभिधाय धनपोटलिकं गृहीत्वा समुद्रतीरं जगाम। तत्र कञ्चिन्नाविकं धीवरमुपगम्याह—'भ्रातर्नाविक ! अमी दुस्त्यजा मम प्राणाः त्यक्तुकामेनापि मया न त्यक्तुं शक्यन्ते। ततस्त्वं परिवारशोकाकुलं मां समुद्रे मज्जयित्वा मारय। तद्वेतनत्वेन तुभ्यमेकं सुवर्णखण्डं दास्यामि।'

नाविक उवाच—'तर्हि देहि मे सुवर्णखण्डम्।' ततः सुवर्णानि प्रकाश्य दित्सया ददर्श। दृष्ट्वा च पुनरब्रवीत्—'भ्रातर्नाविक ! सुवर्णानि दारुनिशुद्धानि परस्मै दातुमशक्यानि तत्पुण्यार्थमेव मां मारय।' नाविकः तानि सुवर्णानि दृष्ट्वा दृष्टधनलोभस्तमुवाच—'मा दास्यसि सुवर्ण-खण्डम्। पुण्यार्थमेव मारयिष्यामि।'

इत्यभिधायानन्तरं तं जले मज्जयित्वा सुवर्णानि गृहीत्वा नाविकः कृतार्थो बभूव।

जनयति हृदि खेदं मंगलं न प्रसूते,
परिहरति यशांसि ग्लानिमाविष्करोति ॥
उपकृतिरहितानां सर्वभोगच्युतानाम्
कृपणकरगतानां संपदां दुर्विपाकः ॥

* * *

## वनप्रस्थानकाले रामस्य सीताम्प्रत्युपदेशः ।

अतीव विलपन्तीं तां प्रोवाच रघुनन्दनः ।
'सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १ ॥
चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया ।
पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २ ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् ।
भरतस्य समीपे ते नाहं कत्थ्यः कदाचन ॥ ३ ॥
तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् ।
स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ ४ ॥
अहञ्चापि प्रतिज्ञां तां गुरोः समनुपालयन् ।
वनमद्यैव यास्यामि स्थिराभव मनस्विनि ॥ ५ ॥

याते च मयि कल्याणि वनं मुनिनिषेवितम् ।
व्रतोपवासपरया भवितव्यं त्वयानघे ॥ ६ ॥
कल्यमुत्थाय देवानां पूजां कृत्वा यथाविधि ।
वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ७ ॥
माता च मम कौसल्या वृद्धा सन्तापकर्षिता ।
धर्ममेवाग्रतः कृत्वा त्वत्तः सम्मानमर्हति ॥ ८ ॥
वन्दितव्याश्च ते नित्यं याः शेषा मम मातरः ।
स्नेहप्रणयसंभोगैः समा हि मम मातरः ॥ ९ ॥
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः ।
त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ १० ॥
विप्रियं च न कर्तव्यं भरतस्य कदाचन ।
स हि राजा प्रभुश्चैव देशस्य च कुलस्य च ॥११॥
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः ।
राजानः संप्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥१२॥
औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः ।
समर्थान् संप्रगृह्णन्ति जनानपि नराधिपाः ॥१३॥
सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी ।
भरतस्य रता धर्मे सत्यव्रतपरायणा' ॥१४॥

## सीतायाः प्रत्युत्तरं रामं प्रति ।

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी ।
प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥
'आर्यपुत्र ! पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि कर्माणि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥२॥
भर्तुर्भाग्यं तु भार्यैका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ३ ॥
न पिता नात्मजो नात्मा न भ्राता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिस्सदा ॥ ४ ॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ५ ॥
प्रासादाग्रैर्विमानैर्वा वैहायसगतेन वा ।
सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ६ ॥

अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् ।
नास्मि सम्प्रति वक्तव्या वर्तितव्यं यथा मया ॥७॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलगणसेवितम् ॥ ८ ॥
सुखं वने निवत्स्यामि यथैव भवने पितुः ।
अचिन्तयन्ती त्रीन् लोकांश्चिन्तयन्ती पतिव्रतम् ॥९॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।
सह रंस्ये त्वया वीर ! वनेषु मधुगन्धिषु ॥ १० ॥
त्वं हि कर्तुं वने शक्तो राम ! संपरिपालनम् ।
अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥ ११ ॥
साहं त्वया गमिष्यामि वनमद्य न संशयः ।
नाहं शक्या महाभाग ! निवर्तयितुमुद्यता ॥ १२ ॥
फलमूलाशना नित्यं भविष्यामि न संशयः ।
न ते दुःखं करिष्यामि निवसन्ती त्वया सह ॥१३॥
इच्छामि सरितः शैलान् पल्वलानि सरांसि च ।
द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता ॥१४॥
हंसकारण्डवाकीर्णाः पद्मिनीः साधुपुष्पिताः ।
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण संगता ॥१५॥

अभिषेकं करिष्यामि तासु नित्यं यतव्रता ।
सह त्वया विशालाक्ष ! रंस्ये परमनन्दिनी ॥१६॥
स्वर्गेऽपि च विना वासो भविता यदि राघव ।
त्वया मम नरव्याघ्र नाहं तदपि रोचये ॥ १७ ॥
अहं गमिष्यामि वनं सुदुर्गमम्
मृगायुतं वानरवारणैर्युतम् ।
वने निवत्स्यामि यथा पितुर्गृहे
तवैव पादावुपगृह्य संमता ॥ १८ ॥
अनन्यभावामनुरक्तचेतसं
त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां
न ते हि मत्तो लघुता भविष्यति ॥ १९ ॥

❀ ❀ ❀

## करगरानाथ-कथा

अस्ति वत्सोमं नाम नगरम्। आसीत्तत्रैको विद्वान् दरिद्रो ब्राह्मणः। तस्य च प्रिया करगराभिधाना यथार्थनाम्नी सर्वजन्तूद्वेगकारिणी यत्तद्द्वारदेशवृक्षस्थितो भूतस्तस्या भयात् पलाय्याटव्यां गतः। ब्राह्मणोऽपि तस्या उद्वेगाद् देशान्तराभिमुखोऽभूत्। सोऽपि च तेन भूतेन दृष्टो जल्पितश्च—'मार्गश्रान्तस्त्वम्। तेन त्वयाद्य ममातिथिना भाव्यम्।'

विप्रेण भीरुणोक्तम्—'यदातिथ्यं करोषि तद् विधेहि शीघ्रम्।' भूतेनोक्तम्—'न त्वया भेतव्यम्। त्वं मम स्वामी, यतोऽहं त्वद्गृहद्वारवृक्षस्थो करगराभयेनेहागतः। ततस्तव निजस्वामिनो यथावदुपकर्तव्यमेव। तस्मात्त्वं द्विज, मृगा-

वतीं राजधानीं मदनभूपतिसनाथां गच्छ। तत्र चाहं तत्पुत्रीं मृगलोचनां ग्रहीष्ये। सा चान्यैर्मान्त्रिकैर्नीरुजा न भविष्यति। त्वयि च समागते तव दर्शनादेवाहं त्यक्ष्यामि तां, त्वया च कोऽपि मन्त्रवादो नैव विधेयः।'

इति भणित्वा भूतो गत्वा तां राजपुत्रीं जग्राह। विप्रोऽपि तत्र ययौ। राज्ञा स्वदुहिता व्यन्तरेणाविष्टा दृष्टा। 'यः कश्चनैतां पिशाचान् मोचयेत् स समुचितपुरस्कारं लभेतेति' घोषणा दत्ता। भूतादिष्टेन विप्रेण डिण्डिमः स्पृष्टः। ततो राजकुलगतो विप्रो विदधे सकलमाचार्यविस्तरम्। तथापि भूतो यावन्न मुञ्चति तावद् विप्रः किं करोत्विति प्रश्नः। भूतग्रहेऽनिवृत्ते विप्रेणाभिहितम्—

'मनुष्याः सुकुलोत्पन्ना अपि च ब्रह्मचारिणः।
न भवन्ति मृषावाचः किं पुनर्देवयोनयः॥'

ततो भूतस्तां त्यक्त्वा जगाम। इयं मुक्तेति मत्वा ब्राह्मणाय राज्ञा सुता राज्यार्धं च दत्तम्। विप्रोऽपि पूर्णमनोरथो भूत्वा जगाम। स करगरापती राजकन्यया सह राजलक्ष्मीं भुङ्क्ते। अत्रान्तरे स भूतः कर्णावतीं गत्वा राज्ञो भार्यां सुलोचनां जग्राह। सा मदनस्य पितृष्वसा। सा चा-

त्यर्थं पीडिता जीवितशेषाऽभूत। सापि शत्रुघ्ननरपते-र्भार्या मातृराज्ये केशवमान्त्रिकमाकारयामास। केशवोऽपि राज्ञः प्रियवाक्यैः प्रहितो न गन्तुं कामयामास। तदा स करगरापतिर्भार्यानुरोधतो जगाम। तत्र गतः सम्मानितो महीभुजा शत्रुघ्नेन गतः सुलोचनावेश्मनि। स च भूतस्तमायान्तं दृष्ट्वा परुषैर्वाक्यैस्तर्जयन्नुवाच—'मया प्रतिपन्नमेकदेशे कृतम्। अधुना तु विप्र, त्वयात्मा रक्षणीयः।' स द्विजस्तु न मन्त्रं नो तन्त्रं जानीते, ततः किं करोतु? कालवेदी स कृताञ्जलिर्जगाद द्विजस्तत्कर्णोपान्ते—

'प्राप्ता करगरा भूत, पृष्ठलग्नात्र मेऽधुना
तद्भयाच्चात्र संप्राप्तस्तद्व्याख्यातुमिहागतः ॥ २ ॥'
श्रुत्वैतद्वचनं भूतो भीतो विस्मितमानसः।
यामीति ब्राह्मणं प्रोच्य पात्रं त्यक्त्वा जगाम तत्॥३॥

❀ ❀ ❀

## भोजराजस्य सिंहासनोद्धारकथा

अथ काले भोजराजः सिंहासनं प्राप। तस्मिन् राज्यं कुर्वत्येकदा कश्चिद् ब्राह्मणो यत्र सिंहासनं निक्षिप्तं, तत् क्षेत्रं कृष्ट्वा यवादीनवपत्। तस्मिन् क्षेत्रे महत् फलमभूत्। स ब्राह्मणो यत्र तत् सिंहासनं निक्षिप्तं तदुच्चस्थानमिति मत्वा, पक्षिणामुत्थापनार्थं तदुपरि मञ्चं कृत्वोपविश्य पक्षिण उत्थापयति।

तत एकदा भोजराजो विहारं कर्त्तुं सकलराजकुमारैः समवेतस्तत्क्षेत्रसमीपं यावद्गच्छति, तावन्मञ्चोपरि स्थितेन ब्राह्मणेनोक्तं—"भो राजन्! एतत् क्षेत्रं सम्यक् फलितमस्ति, ससैन्यः समागत्य यथेच्छं भुज्यताम्, अश्वेभ्यश्चणका दीयन्ताम्। अद्य मज्जन्म सफलमभूत् यतो भवान् ममातिथिर्जातः। ईदृशः प्रस्तावः कदा सम्पद्यते?"

तच्छ्रुत्वा स राजा ससैन्यः चेत्रमध्ये प्रविष्टः। अथ ब्राह्मणो-ऽपि मञ्चकादवरुह्य राजानं चेत्रमध्ये स्थितं भणति—"भो राजन्! किमयमधर्मः क्रियते? इदं ब्राह्मणचेत्रं विनाश्यते त्वया। जनैर्यद्यन्यायः क्रियते, प्रतीकारार्थं तुभ्यं निवेद्यते। त्वमेवान्यायं कर्त्तुं प्रवृत्तः। इदानीं को वा निवारयिष्यति? भवान् धर्मशास्त्राभिज्ञश्च ब्राह्मणद्रव्यं कथं नाशयति? ब्राह्मणस्वमेतद् विषम्। तथाहि—

न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम्॥ १॥"

इति तेनोक्तं श्रुत्वा राजा यावत् चेत्राद्बहिः सपरिवारो निर्गच्छति, तावत् पक्षिणः समुत्थाप्य पुनः मञ्चमारूढो ब्राह्मणो वदति,—"भो राजन्! किमिति गम्यते? चेत्रं साधु फलितमस्ति, यावनालकदण्डानश्वादयो भक्षयन्तु, बहून्युर्वारुकफलानि सन्ति, तान्युपभुज्यन्ताम्।" पुनर्ब्राह्मणवचनमाकर्ण्य सपरिवारो राजा यावत् चेत्रमध्ये प्रविशति, तावत् पक्ष्युत्थापनार्थं मञ्चादवरुह्य स पुनस्तथैवाभणत्।

ततो राजा स्वमनसि विचारयति,—"अहो आश्चर्यम्!

यदायं ब्राह्मणो मञ्चमारोहति तदास्य चेतसि 'दातव्यं भोक्तव्यमिति' बुद्धिरुत्पद्यते, यदावतरति तदा दीन-बुद्धिर्भवति । तदहं मञ्चमारुह्य पश्यामि ।" इति मञ्चमारुरोह । भोजराजस्य चेतसि तदा वासनैवमभूत्—"विश्वस्यार्त्तिः परिहरणीया, सर्वस्य लोकस्यापि दारिद्र्यं सम्यङ् निवारणीयं, दुष्टा दण्डनीयाः, सज्जनाः पालनीयाः, प्रजा धर्मेण पालनीयाः । किं बहुना—अस्मिन् समये यदि कश्चिच्छरीरमपि प्रार्थयिष्यते तदपि देयम्" इति । आनन्दपरिपूर्णः पुनर्विचारयति—"अहो ! एतत् क्षेत्र-मस्यैवंविधां बुद्धिमुत्पादयति । कथमेतत्क्षेत्रस्य माहात्म्यं ज्ञायते ?" इति विचार्य ब्राह्मणमाहूयावादीत्—"भो ब्राह्मण ! तवैतस्मात् क्षेत्रात्कियल्लाभो भवति ? अहमेतत् क्षेत्रं क्रेतुमिच्छामि ।" ब्राह्मणेनोक्तं—"भो राजन् ! सकलकुशलेन त्वयाविदितं किमपि नास्ति, यदर्हसि तत्कुरु । राजा नाम साक्षाद्विष्णोरवतारभूतः, तस्य दृष्टिर्यस्योपरि पतति, तस्य दैन्यदुर्भिक्षादयो नश्यन्ति राजा हि साक्षात् कल्पवृक्षः, स त्वं मम दृष्टेर्गोचरोऽभूः, अद्य मम दैन्यदारिद्र्यादीनामवसानं जातम्, क्षेत्रं कियत् ?"

ततो राजा ब्राह्मणं धनधान्यादिना परितोष्य, तत् क्षेत्रं गृहीत्वा मञ्चकाधः खानयितुं प्रारम्भमकार्षीत्। पुरुषप्रमाणे गर्त्ते जाते, शिलैका सुमनोहरावलोकिता। तदधश्चन्द्रकान्तशिलाविनिर्मितं नानारत्नखचितं द्वात्रिंशत्पुत्तलिकाभिर्युक्तमतिरमणीयं दिव्यमेकं सिंहासनमपश्यत्। तत्सिंहासनं दृष्ट्वा भोजराजः परमानन्दलहरीपरिपूर्णहृदयो भूत्वा सिंहासनं ग्रामं प्रति नेतुं यावदुच्चालयति, तावदधिकं गुरु भवति, नोच्चलति च। ततो मन्त्रिणमवदत्- "भो मन्त्रिन्! किमर्थमेतत् सिंहासनं नोच्चलति?" मन्त्रिणोक्तं—"राजन्! एतत् सिंहासनं दिव्यमपूर्वञ्च, बलिहोमपूजादिकं विना नोच्चलिष्यति, तव साध्यञ्च न भविष्यति" इति।

तस्य वचनं श्रुत्वा राजा ब्राह्मणानाहूय तैः सर्वमपि विधानं कारितवान्। ततस्तत् सिंहासनं लघु भूत्वा स्वयमेवोच्चलति स्म॥

❀ ❀ ❀

## कूटानि

पानीयं पातुमिच्छामि त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ १ ॥
समरे हेमरेखाङ्कं बाणं मुञ्चति राघवे ।
स रावणोऽपि मुमुचे मध्ये रीतिधरं शरम् ॥ २ ॥
विषं भुङ्क्ष्व महाराज स्वजनैः परिवारितः ।
विना केन विना नाभ्यां कृष्णाजिनमकण्टकम् ॥ ३ ॥

## अन्तरालापाः

युधिष्ठिरः कस्य पुत्रो गङ्गा वहति कीदृशी ।
हंसस्य शोभा का वास्ति धर्मस्य त्वरिता गतिः ॥ १ ॥
भोजनान्ते च किं पेयं जयन्तः कस्य वै सुतः ।
कथं विष्णुपदं प्रोक्तं तक्रं शक्रस्य दुर्लभम् ॥ २ ॥
कः खे चरति का रम्या का जप्या किं विभूषणम् ।
को वन्द्यः कीदृशी लङ्का वीरमर्कटकम्पिता ॥ ३ ॥

* * *

## प्रहेलिकाः

एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः ।
क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः ॥ १ ।  (सूचिका)

कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी ।
पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ।२॥ (लेखिनी)

वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणिः ।
त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः ॥३॥
( नारिकेरफलम् )

अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥४॥ (पत्रम्)

## सूक्तयः

अगच्छन् वैनतेयोऽपि पदमेकं न गच्छति ॥

अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥

आरब्धे हि सुदुष्करेऽपि महतां मध्ये विरामः कुतः ॥

इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥

उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

कोऽतिभारः समर्थानाम् ॥

गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥

घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ॥

चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥

तीव्रसत्त्वस्य न चिराद्भवन्त्येव हि सिद्धयः ॥

दर्दुरा यत्र वक्तारः तत्र मौनं हि शोभनम् ॥

दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥

न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः ॥
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥
न रत्नमन्विष्यति मृग्यते हि तत् ॥
निस्सारस्य पदार्थस्य प्रायेणाडम्बरो महान् ॥
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥
पङ्को हि नभसि क्षिप्तः क्षेप्तुः पतति मूर्धनि ॥
परसदननिविष्टः को लघुत्वं न याति ॥
पाणौ पयसा दग्धे तक्रं फूत्कृत्य पामरः पिबति ॥
महान् महत्येव करोति विक्रमम् ॥
यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ॥
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥
यो यद्वपति बीजं हि लभते सोऽपि तत्फलम् ॥
शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ॥
सन्तोष एव पुरुषस्य परं निधानम् ॥
सम्पूर्णकुम्भो न करोति शब्दम् ॥
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥

* * *

# शब्दार्थकोषः

## ईशस्तवः

पृष्ठ-१—चराचरम् = स्थावर और जंगम।

संहरसि = नाश करता है।

प्रपञ्चम् = सृष्टि को।

निदानम् = कारण।

अखिललोकसृष्टिनिपुणः = सब संसार की रचना में प्रवीण।

अविता = रक्षक ( अवितृ–प्रथ०–एकव० )।

पृष्ठ-२—वाधाहरः = विघ्नहर।

शङ्करः = कल्याणकारक।

पादाम्बुजम् = चरणकमल को।

## ज्ञानाम्बाया बुद्धिमत्त्वम्

पृष्ठ-३—व्युत्पन्नबुद्धयः = ( व्युत्पन्ना (वि+उद्+√पद्+क्तः)। बुद्धिः येषां, ते ) सुशिक्षित।

शब्दशास्त्रे = व्याकरण में।

पठति = (√पठ्+शतृ (अत्), सप्तमी–एकव० ) पढ़ते हुवे।

विहाय = ( वि+√हा+ल्यप् ) छोड़ कर।

पृष्ठ-४—द्वितीया = सहचारिणी, पत्नी।

निरस्य = ( निर्+√अस्+ल्यप् ) त्याग कर।

## बधिरकथा

पृष्ठ-५—प्रतिकूलवाक् = ( प्रतिकूला वाक् यस्य, सः ) उलटी बात कहने वाला।

चिकित्सकः=वैद्य ।

पृष्ठ–६—समाविष्टः (सम्+आ+√विश्+क्तः) ग्रस्त ।

क्षते क्षारम्=घाव पर नमक ।

अर्धचन्द्रदानेन=गरदनिया देकर ।

## भारतगीतिका

पृष्ठ–७—'अलम्' के योग में तृतीया प्रयुक्त होती है ।

शाश्वतः=चिरस्थायी ।

धरायाम्=पृथ्वी पर ।

चतुर्वर्ग=चार वर्ग ( धर्म, अर्थ, काम, मोक्ष ) ।

पृष्ठ–८—चन्द्रशुभ्रम्=चन्द्र की तरह श्वेत ( निर्मल ) ।

## अशोकः

पृष्ठ–९—क्रिस्तोः=ईसामसीह से ।

आधिपत्यम्=शासन ।

ऐहिकम्=इस संसारसम्बन्धी ।

आमुष्मिकम्=परलोकसम्बन्धी ।

योगक्षेमम्=प्राप्त वस्तुओं (धन-आदि) की रक्षा ।

सन्नद्धसहायः=(सन्नद्धाः (सम्+√नह्+क्त) सहायाः यस्य, सः ) सहायकों को तैयार कर ।

अभ्ययुङ्क्त=(अभि+√युज्+त(लङ्–प्र०ए०) चढ़ाई की ।

पृष्ठ–१०—अब्दस्य=वर्ष के ।

प्रतिपक्षीयान्=शत्रुओं को ।

विशसितान्=कटे हुए ।

आकीटादामर्त्यम्=कीड़े से लेकर मनुष्य तक ।

सामरस्यम्=(समः रसः=समरसः,तस्य भावः, सामरस्यम्)
समभाव, एकता ।

मतभेदमूलकम्=(मतानां भेद एव मूलं यस्य, तत् ) मतों
का भेद ही जिस का कारण है ।

परिहरन्=दूर करता हुआ ।

मतान्तराय=(अन्यत् मतं=मतान्तरम्) दूसरा मत ।

अद्रुह्यत्=वैर करता था। (√द्रुह् के योग में चतुर्थी का प्रयोग
होता है) ।

पृष्ठ-११—असंस्कृतम्=असभ्य ।

निरमापयत्=(निर्+√मा+णिच्+त(लङ्-प्र०ए०)बनवाया

सौकर्याय=आसानी के लिये ।

यथापेक्षा=आवश्यकता के अनुसार ।

## शिविराजोपाख्यानम्

पृष्ठ-१२—उशीनरेषु=उशीनर (आजकल यह कंधार नाम से प्रसिद्ध है)
में । देशवाचक शब्दों में प्रायः बहुवचन प्रयुक्त
होता है) ।

सर्वसत्त्वाभयप्रदः=सब जीवों को अभय देने वाला ।

मायाकपोतवपुषम्=बनावटी कबूतर का रूप धारण किये हुए ।

अन्वपतत्=पीछे दौड़ा ।

महाकारुणिकः=अतिदयालु ।

अमुमुक्षुः=छोड़ना न चाहता हुआ । (√मुच्+सन्+अत
( शतृ ) प्रथमा एकव० )

पृष्ठ-१३—जिज्ञासुः=जानने की इच्छा वाला ।

असकृत्=बारबार ।

अक्षतदेहम्=घावों से रहित शरीर वाले ।

अन्तर्धानमवापतुः=लुप्त हो गये।

पृष्ठ–१४—ऐन्द्रजालिकः=मदारी (इन्द्रजालेन चरति—ठक्)।

स्वलाघवानि=अपने कर्तब।

विपुलकन्धरः=(विपुलः कन्धरः (कं (शिरः) धारयति) यस्य, सः) मोटी ग्रीवा वाला।

पृष्ठ–१५—रक्तलिप्तः=लहू से भरा हुआ (रक्तेन लिप्तः)।

कबन्धः=धड़।

कस्य कृते=किसके लिये (कृते-अव्यय)।

प्रतिपन्नम्=माना गया है (प्रति+√पद्+क्त)।

पृष्ठ–१६—हुताशनम्=आग।

अरुन्धती=महर्षि वशिष्ठ की स्त्री का नाम।

श्रीखण्डादिभिः=चन्दन आदि से।

अवसानम्=अन्त।

शिरोधार्या=सिर पर रखने योग्य, माननीय।

पृष्ठ–१७—जोषम्=चुपचाप (अव्यय)।

सहोदर=सगा भाई।

समक्षम्=आँखों के सामने।

तद्वक्त्रावरणम्=उसके मुख के कपड़े को (तस्याः वक्त्रस्य आवरणम्)।

पृष्ठ–१८—उन्मोच्य=हटाकर (उद्√+मुच्+ल्यप्)।

ब्रह्मायुः=ब्रह्मा के समान दीर्घ आयु वाला।

## प्रभात-वर्णनम्

पृष्ठ–१९—मिहिरः—सूर्य।

विदलिततिमिरः=अन्धकार का नाशक ( विदलितं तिमिर येन, सः )।

मधुकरनिकरः=भ्रमर समूह ।

अविरामम्=निरन्तर, लगातार ।

पृष्ठ–२०—खगकुलम्=पक्षिगण ।

रुचिररुणाभा=सुन्दर प्रकाश ।

सनिवेशम्=मन लगा कर ।

अनुपममोदः=अद्वितीय प्रसन्नता ।

## जीमूतकेतोरौदार्यम्

पृष्ठ–२१—कामयते=चाहता है ।

ईप्सित=अभीष्ट ।

विजन=एकान्त में ।

क्षणभंगुराः=तुरन्त नाश होने वाले ।

पृष्ठ–२२—कनकं=सुवर्ण को ।

जलबुद्बुदसन्निभम्=पानी के बुलबुले के समान ( क्षण-भंगुर ) ।

प्रवातदीपचपलाः=तेज़ हवा में दिये की तरह चंचल । ( प्रवाते दीप इव चपलाः )

परिचर्यां=सेवा ।

पृष्ठ–२३—उपयेमे=ब्याह किया ।

क्रन्दन्तीम्=चिल्लाती हुई को ।

पयोधिपुलिनवर्तिनि=समुद्र के किनारे पर होने वाले ।

पृष्ठ–२४—विषण्णः=दुःखित ( वि+√सद्+क्तः ) ।

व्यपदेशेन=बहाने से ।

पृष्ठ-२५—अविपद्य=दुःखी न होकर।

प्रत्यपद्यत=मान लिया।

## गौतम्या धैर्यम्

पृष्ठ-२६—जन्मान्तरकृतम्=पूर्वजन्म में किया हुआ (अन्यत् जन्म=जन्मान्तरं, तस्मिन् कृतम्)।

स्थविरा=वृद्धा।

पञ्चत्वं गतः=मर गया।

प्राकृतो जनः=साधारण मनुष्य।

मुक्तकण्ठम्=गला खोल कर, उच्च स्वर से।

पृष्ठ-२७—पुत्रहा=पुत्र मारने वाला (पुत्रहन्—प्रथ० एक०)।

दुरितेन=पाप से।

व्याहरन्ति=कहते हैं।

पृष्ठ-२८—कृतागसम्=अपराधी को (कृतम् आगः येन, सः तम्)।

अनुमन्यन्ताम्=मानें, स्वीकार करें।

पृष्ठ-२९—मखेषु=यज्ञों में।

वायुतन्त्राः=वायु के अधीन।

पृष्ठ-३०—निर्दिष्टकारिणौ=आज्ञाकारी।

सरभसम्=शीघ्र (क्रियावि०)

शैशवे=बचपन में।

जन्मान्तरीयम्=दूसरे जन्म का (अन्यत् जन्म-जन्मान्तरं तत्र भवम्)।

## नकुलोलूकमार्जाराणाम्

पृष्ठ-३१—विनोदः=दिलबहलाव।

परिबभ्रमुः=फिरा करते थे।

लिप्सया=पकड़ने के लिये।

पृष्ठ-३२—अभितः क्षेत्रम्=खेत के चारों ओर (अभितः के योग में द्वितीया होती है)।

जिघांसया=मारने की इच्छा से।

निभृतागतः=छिप कर आया हुआ।

जहर्ष=प्रसन्न हुआ।

विग्नः=भीत।

पाशच्छेदोपयोगिनम्=जाल काटने के काम का (पाशानां छेदः, तस्मै उपयोगी, तम्)।

पृष्ठ-३३—ऋजूनाम्=सरल स्वभाव वालों का।

सहवासात्=संग रहने के कारण।

उत्सङ्ग=गोद।

लुब्धकागमनोन्मुखः=शिकारी के आने की प्रतीक्षा करता हुआ।

मृषा=झूठ।

लुब्धकत्रासविद्रुते=शिकारी के भय से भागे हुए।

कालयुक्त्या=अवसर आने पर।

## खरनखरसिंह-कथा

पृष्ठ-३४—जरा=बुढ़ापा।

क्षुत्क्षामकण्ठः=भूख से कृश कंठवाला (क्षुधा क्षामः कण्ठः यस्यः, सः)।

अस्तमनसमये=सूर्यास्त के समय।

पृष्ठ-३५—सिंहपदपद्धतिः=शेर के पावों के चिह्न।

समयः=संकेत।

वेपथुः=कंपन ।

संप्रधार्य=ठान कर ।

## पितृभक्तिः

पृष्ठ–३७—श्रेष्ठी=सेठ ।

विषयासक्तः=विषयों में फंसा हुआ ।

स्वसद्मतः=अपने घर से ।

पृष्ठ–३८—कीरम्=तोते को ।

रहसि=एकान्त में ।

पुरीषोत्सर्गः=मलत्याग ।

कोपाविष्टः=गुस्से से भरा हुआ ।

निर्भर्त्सितः=अनादर किया हुआ ।

पक्षिहा=पक्षी को मारने वाला ।

पृष्ठ–३९—स्वरहस्यज्ञानकारणम्=अपने भेद जानने का कारण ।

रक्ताक्तहस्तम्=लहू से भरे हुए हाथों वाला ।

यमप्रतिभम्=यमसदृश ।

निजान्वयप्रणीतम्=अपने कुल में प्रचलित ।

पराङ्मुखः=विमुख ।

सम्भाषणार्हः=बात करने के योग्य ।

पृष्ठ–४०—भाजनम्=पात्र ।

## विद्याप्रशंसा

पृष्ठ–४१—प्रतिपत्तये=यश के लिये ।

आद्रियते=आदर की जाती है ।

भारति=हे सरस्वती ।

व्ययतः=खर्च करने से ।

गोचरं=वश में ।
दंश=मच्छड़ आदि काटने वाले कीट ।
वराकोदरपूरणे=दीन पेट को भरने में ।
अशनम्=भोजन ।
वसुमतीपतिना=पृथ्वीपति ( राजा ) से ।

पृष्ठ-४२—समविभागहरैः=जायदाद को एक जैसा बाँटने वाले ( रिश्तेदारों ) से ।

भारकारि=बोझल ।
नियुङ्क्ते=लगाती है ।
कान्ता=भार्या ।
अपनीय=दूर कर ।
वितनोति=फैलाती है ।
कल्पलता=कल्पवृक्ष ।

## धर्मबुद्धिकथा

पृष्ठ-४२— धरापृष्ठे=पृथ्वी पर ।
अन्यदा=एक दिन ।
सुखास्वादतत्परौ=आनन्द भोगने में तत्पर ।
निशम्यताम्=सुनिये ।
अश्रेयसे अलम्=अहित के लिये पर्याप्त ( अलम् के योग में चतुर्थी ) ।

पृष्ठ-४४— सहस्रस्य पणः मुक्तः=मैं हज़ार रुपयों की शर्त लगाता हूँ
दापयिष्यामि=दिलवाऊंगा ।
प्रतिभुवौ=ज़ामन ( Surities)
विदितार्थं कृत्वा=खूब समझ बुझ कर ।

वादिनौ=फरियादी ( Plaintiff )
नगोत्तम=उत्तम वृक्ष ।
फूत्कुर्वन्तम्=फूकें मारते हुए ।
निग्रह=दण्ड ।

## मौर्ख्यफलम्

पृष्ठ-४५—मुग्धानाम्=मूर्खों के ।
अश्रौषीत=सुना ।
वारिपूरितम्=जल से भरा हुआ ।
पुलिनानि=किनारों को ।
उत्खातम्=खुदा हुआ, खोदा ।
एत्य=आकर ( आ+√इ+ल्यप् ) ।
विविच्य=विचार कर ।
पुच्छाग्रलग्नम्=पूँछ के साथ चमटे हुए ।
भौतिकम्=शैव साधु ।
उत्क्षिप्य=उड़ा कर ।
गतागतानि कुर्वन्तम्=जाते आते हुए ।
आलम्ब्य=पकड़ कर ।
आश्लिष्य=आलिंगन कर ।
तडागोपान्तम्=तालाब के पास ।
अवरः=अन्य ।
धृतचरणस्य=पाँव पकड़े हुए के ( धृतौ चरणौ येन सः, तस्य ) ।
अन्योन्यश्लिग्नः=एक दूसरे को पकड़े हुए ।
नभः=आकाश को ।

पृष्ठ-४७—लाङ्गूलालम्बिभीते=जिसकी पूँछ को साधुओं ने पकड़ा हुआ था।

संश्लिष्टौ कृत्वा=जोड़ कर।

खात्=आकाश से।

निर्विमर्षा=विचाररहित।

## चारुचर्या

पृष्ठ-४८—ब्राह्मे मुहूर्ते=सूर्योदय से पहले दो घड़ी तक का समय, उसमें।

अतन्द्रितः=आलस्यरहित।

पुण्यपूतशरीरः=पुण्यों से पवित्र शरीर वाला।

वृत्रहा=इन्द्र ( वृत्रहन्-प्रथ० एकव० )।

सेहे=सहन किया।

प्राज्यम्=बड़े।

पृष्ठ-४९—गुणस्तवेन=गुणप्रशंसा से।

रामकार्यभरक्षमः=रामचन्द्र के कार्यभार को उठाने के समर्थ।

क्रोधयातुधानस्य=क्रोधरूपी राक्षस के।

क्षतजम्=लहू को ( क्षतात् जायते, तत् )।

व्याज=छल।

पुत्रायत्तम्=पुत्र के आधीन।

पुत्रार्पितप्रभुत्वः=पुत्र को राज्य देने वाला ( पुत्राय अर्पितं प्रभुत्वं येन, सः )।

तृणोपमः=तृणसमान, तुच्छ।

सर्वसत्त्वोद्धृतौ=सब प्राणियों के उद्धार में।

जन्मावधि=जीवनपर्यन्त।

पृष्ठ-५०—शरतल्पगतः=बाणों की शय्या पर पड़ा हुआ।

२-श्लोक—वृत्र का इन्द्र से वैर था और उसे बड़ा तंग किया करता था। इन्द्र ने उसे मारने को कई यत्न किये पर मार न सका। अन्त में विष्णु की सम्मति से दधीचि ऋषि की हड्डियों से शस्त्र बनाकर उन से उसको मार डाला। इस से इन्द्र का नाम 'वृहहन्' भी है। यह कथा देवी-भागवतमें है।

३-श्लोक—हरिश्चन्द्र, विश्वामित्र को दान में सर्वस्व देने के पश्चात, दान-दक्षिणा चुकाने के लिये काशी में चाण्डाल का दास बना था। यह कथा महाभारत में है।

४-श्लोक—महाभारत-युद्ध में द्रोणाचार्य किसी उपाय से न मरता था, पर उसका मारना आवश्यक था, क्योंकि उसके आधिपत्य में पाण्डवों की सेना का संहार हो रहा था। उस समय यह उपाय सूझा कि यदि धर्मपुत्र युधिष्ठिर, जिस पर आचार्य का पूरा विश्वास था यह कह दे कि उसका पुत्र अश्वत्थामा मर गया है तो आचार्य युद्ध छोड़ कर प्राण छोड़ देंगे। कौरव दल में अश्वात्थामा नाम एक हाथी भी था। वह मरा था। युधिष्ठिरने द्रोणाचार्य के पास जाकर कह दिया—अश्वत्थामा हतः, पर साथ ही दबी जबान से यह भी कहा-नरो वा कुञ्जरो वा ( मनुष्य अथवा हाथी ) इस असत्य का

फलस्वरूप उसे कुछ समय नरक भोगना पड़ा।

५-श्लोक—रावण के छोटे भाई विभीषण ने रावण को सीता लौटा देनेको समझाया। वह नहीं माना। विभीषण उसे छोड़ राम से आ मिला। रावण के मरने पर उसे लंका का राज्य दिया गया।

७-श्लोक—जब दुःशासन द्रौपदी को केशों से पकड़ कर भरी सभा में लाया था तो भीम ने क्रोधावेश में यह प्रण किया कि मैं दुःशासन के वक्षःस्थल से रुधिर पान करूंगा और उससे द्रौपदी के केशों को सिंचन करूंगा। अन्त में उसने दुःशासन को मार कर अपना प्रण पूरा किया।

८-श्लोक—बालि और सुग्रीव भाई थे, पर शत्रु थे। बालि सुग्रीव से बलवान था और उसे बहुत तंग किया करता था। जब रामचन्द्र और सुग्रीव की मैत्री हो गई तो रामचन्द्र के कहने से सुग्रीव बालि से युद्ध करने लगा। रामचन्द्र ने एक वृक्ष के पीछे खड़े होकर तीर चलाया और बालि को मार दिया।

९-श्लोक—विदुर धृतराष्ट्र का भाई था। वह बहुत नीतिज्ञ था। उसने धृतराष्ट्र और दुर्योधन को पांडवों के साथ युद्ध करने से बहुत रोका था, पर वे नहीं माने।

१०-श्लोक-विश्वामित्र जब राम लक्ष्मण को स्वयज्ञरक्षा के लिये ले जा रहे थे तो रास्ते में उन्होंने राम को सारी अस्त्रविद्या जो उन्हें आती थी, सिखादी।

११-श्लोक-धृतराष्ट्र अन्धा था। उसने राज्य की सारी बाग-

डोर अपने पुत्र दुर्योधन के हाथमें दे दी थी। धृतराष्ट्र न चाहता था कि पांडवों से युद्ध हो, पर दुर्योधन उसकी एक न मानता था, क्योंकि राज्य पाकर वह स्वतन्त्र हो गया था।

## हासविद्योपाख्यानम्

पृष्ठ-५१—सन्धिद्वारे=सेंध पर।
प्रशास्तृपुरुषैः=सिपाहियों से।

पृष्ठ-५२—अस्तं यास्यति=लुप्त हो जायगी।
कथक=बताने वाला।
परिपाटी=रीति।
सर्षप=सरसों का बीज।
उप्यन्ते=बोये जाते हैं।
कन्दलाः=अंकुर।

पृष्ठ-५३—व्यभिचरति=असफल हुआ।
भूपरिष्कारं कृत्वा=ज़मीन सधा (साफ़) कर।
वप्ता=बोने वाला (वप्तृ)।
चारणेभ्यः=भाटों को।
राजोपजीविनः—राजा के नौकर।
अस्तेयिनः=अचौर।

पृष्ठ-५४—जहसुः=हंसे।
संनिधाने=पास।

## सज्जन-प्रशंसा

पृष्ठ-५५—तृणाय मन्यन्ते=तुच्छ मानते हैं।

वासयन्ति=सुगन्धित करते हैं ।
सुमनसाम्=सज्जनों की ।
अन्येद्युः=दूसरे दिन ।
सद्यः=जल्दी ।
क्षीरोदधेः=क्षीरसमुद्र का ।
कल्पतरुः=कल्पवृक्ष ।
दैन्यम्=दरिद्रता को ।
मत्सरी=डाह करने वाला ।
विषायते=विष हो जाता है ( विष का नामधातु ) ।

पृष्ठ–५६—पात्रम्=अधिकारी को वा तैलपात्र को ।
गुणान्=गुणों को वा बत्तियों को ।
दोष=दुर्गुण वा ( दोषा=रात्रि )
प्रमार्ष्टि=दूर करता है ।
विकसति=खिलता है ।
सप्तसप्तिः=सूर्य ।
विटपिनाम्=वृक्षों की ।
अभ्यर्थ्यन्ते=प्रार्थना किये जाते हैं ।

## कमलाकरोपाख्यानम्

पृष्ठ–५७—क्षेमम्=कुशलता को ।
एकपुत्रः=एक पुत्र वाला ( एकः पुत्रः यस्य, सः ।
आकण्ठम्=गले तक भर कर ।
विषयोन्मुख=विषयों में रुचि रखने वाला ।

पृष्ठ–५८—उपसृत्य=पास जाकर ।

अध्यापयितुम्=पढ़ाने को (अधि+√इ(इङ्+णिच्+तुम्)।
पुष्कल=बहुत।
खनित्रेण=कुदाल से।

पृष्ठ–५९—रहस्यतमम्=अतिगुप्त।
दिदृक्षुः=देखने की इच्छा वाला।

## समस्या

पृष्ठ–६०—गजेन्द्रवदनम्=हाथी के मुख वाले ( गणेश को )
सत्त्वे=उद्यम में।
उपकरणे=सहायक साधन में।
जन्मस्थानम्=उत्पत्तिस्थान ( अगस्त्य को 'घड़े में से उत्पन्न' बताते हैं )।
मृगपरिजनः=हरिणों के परिवार वाला ( मृगाः परिजनाः यस्य, सः )।
भूर्जवसनः=भोजपत्र के बने वस्त्रों वाला।
एवंविधगुणः=ऐसे गुणों वाला ( एवंविधाः गुणाः यस्य, सः )।

पृष्ठ–६१—पाथोधिम्=समुद्र को।
कराम्भोजकुहरे=हाथों से बनी हुई अंजलि में।
भुजगयमिताः=सांपों से बांधे हुए।
निरालम्ब=आश्रयरहित।
चरणविकल=पादरहित ( सूर्य के सारथि, अरुण को पादविहीन बताया जाता है )।
अपार=जिस का कोई अन्त ( छोर ) नहीं।
विपक्षः=शत्रु।

पौलस्त्यः=रावण ( पुलस्तस्यापत्यम् ) ।

पदातिः=पैदल ।

पृष्ठ–६२—पौष्पम्=पुष्पों का बना ।

मौर्वी=चिल्ला ।

मधुकरमयी=भ्रमररूपी ।

हिमकरः=चन्द्रमा ।

अनङ्गः=शरीररहित ( कामदेव ) ।

अनर्घ्यान्=अमूल्य ।

## आश्रमपदम्

पृष्ठ–६३—अयत्नरमणीयः=स्वभावसुन्दर ।

मनोज्ञम्=सुन्दर ।

पृष्ठ–६४—सुरभिः=सुगन्धियुक्त ।

निरुद्वेगाः=निर्भय ।

तरुवीथिः=वृक्षश्रेणी ।

प्रसूनानि=पुष्प ।

परिचरन्ति=सेवा करते हैं ।

परिहरन्ति=छोड़ते हैं ।

संयच्छन्ति=वश में करते हैं ।

सुकृतम्=पुण्य ।

पृष्ठ–६६—छिन्ननिखिलसम्बन्धाः=जिनका ( संसार से ) सारा सम्बन्ध टूट गया है ।

दुरूहम्=कठिन ।

पृष्ठ–६७—हृदयङ्गमम्=चित्त पर प्रभाव करने वाला ( इस पाठ में चरन्ति, आचरन्ति, परिचरन्ति, परिहरन्ति,

संहरति, आहरति में भिन्न भिन्न उपसर्ग जोड़ने से जो अर्थ में भेद हो जाता है, उसका ध्यान रखो )।

## दुर्जननिन्दा

पृष्ठ–६८—पिशुन=सूचक, दुष्ट।

आदत्ते=ग्रहण करता है।

क्रमेलकः=ऊंट।

द्विविधा=दो प्रकार की।

प्रतिक्रिया=उपाय।

उपानन्मुखभङ्गः=जूते से मुंह तोड़ना।

अयः=लोहा।

पृष्ठ ६९—तोयकणाः=जल बिन्दु।

सरित्पूरप्रपूर्णो=नदियों के प्रवाह से भरा हुआ।

मधुरायते=मीठा होता है ( मधुर का नाम धातु )।

श्लेष्मणः=कफ ( विकार ) का।

मधुरैः=मीठी चीज़ों से वा मीठे वचनों से।

कटुकेन=कड़वी औषध से वा कटुवचन से।

पयोधर=बादल।

कलुषप्रकृतिः=नीच स्वभाव वाला।

शार्दूल=शेर।

मद्देहमांसाशिनः=मेरे शरीर का माँस खाने वाले।

पयसा=दूध से।

विश्वासलेशः=थोड़ा सा विश्वास भी।

## विशाखोपाख्यानम्

पृष्ठ-७०—दिव्याम्बरखण्डोपरि=वस्त्र के सुन्दर टुकड़े पर।

करुणार्द्रम्=दया से द्रवी भूत ( पसीजा हुआ )।

दुर्निवारा=अवश्य होने वाली।

पृष्ठ-७१—रत्नप्रसूः=रत्न ( उत्तम पुत्र ) को उत्पन्न करने वाली।

सौभाग्यमदगर्विताः=सौभाग्यवती होने का जिन्हें घमण्ड हो।

परावृत्य=लौटकर।

पृष्ठ-७२—सार्थनामैवाहं विशाखः=मेरा 'विशाख' नाम सार्थक है।

प्रत्याशा=भरोसा।

पृष्ठ-७३—उपकण्ठे=समीप।

अवोचत=बोला।

प्रत्यभिज्ञान=परिचय।

पृष्ठ-७४—प्रतिभा=बुद्धि।

प्रतीहारः=द्वारपाल।

लीलासाध्यम=आसानी से सिद्ध होने योग्य ( सुकर )।

पृष्ठ-७५—कृतसन्धानाः=सन्धि किये हुये।

## परीक्षिच्चरितम्

पृष्ठ-७७—जघ्नुः=मार दिया।

अन्तर्वत्नी=गर्भवती।

अजनयत्=उत्पन्न किया ( √जन्+णिच्+त् ( लङ् )

उपयेमे=विवाह किया।

प्राद्रवत्=भाग गया।

पृष्ठ--७८—आखेटे=शिकार में।
विशुष्युत्तालवे=सूखते हुए तालु वाले।
समवयस्कैः=अपनीसी उम्र वाले।
अपसदः=नीच।
पृष्ठ--७९—यावच्छक्यम्=यथाशक्ति।
आनाययामास=मंगवाया।
दष्टुम्=काटने के लिये।
अपराभूताम्=अनिष्फल।
उपायनत्वेन=भेंट के रूप में।
प्राकृतरूपम्=असली रूप।

## दानमाहात्म्यम्

पृष्ठ--८०—विशिष्टेभ्यः=उत्तम पुरुषों को।
पयोदानाम्=बादलों की।
पयोधीनाम्=समुद्र की।
गतयः=दशायें।
आयास=यत्न।
पृष्ठ–८१—परीवाहः=निकास।
अम्भसाम्=जल का।
कनक=सुवर्ण।
मेदिनीम्=पृथ्वी को।
निर्वेदात्=मानस कष्ट के कारण।

## दूतवाक्यम्

पृष्ठ–८२—प्रतिहाराधिकृताः=द्वारपाल के काम पर नियुक्त।
धार्तराष्ट्राणाम्=धृतराष्ट्र के पुत्र कौरवों का।
पृष्ठ–८३—अवरोधनम्=अन्तःपुर को।

अक्षौहिणी एक सेनावर्ग ( २१८७० रथ, २१८६० हाथी, ३५६१० घोड़े, १०९३५० पदाति )।

अत्रभवति=पूजनीय ( सप्त० एकव० )।

गाङ्गेय=गङ्गा का पुत्र ( भीष्म )।

स्कन्धावारात्=छावनी से।

पृष्ठ-८४—आ अपध्वंस=भाग जाओ।

प्रत्युत्थास्यति=आदर करने को उठेगा।

भार=सुवर्ण का एक तौल ( २००० पल )।

विहगवाहनमात्रविस्मितः=केवल एक पक्षी ( गरुड़ ) के वाहनमात्र से गर्वित।

नारीमृदूनि=स्त्रियों के से कोमल।

सम्भ्रान्ताः=घबरा गये।

स्वैरम्=यथेष्ट।

पृष्ठ-८५—आश्रावितः=सुनाया हुआ।

त्रिदशेन्द्रः=देवेन्द्र ( इन्द्र )।

अनामयम्=कुशलता।

दायादम्=बाप दादा की जायदाद ( विरासत )।

पृष्ठ-८६—दारनिस्पृहः=स्त्रीविषय से विरक्त।

( एक दिन पाण्डु शिकार कर रहा था। उसका एक बाण मृगरूपधारी कन्दम नाम मुनि को जा लगा जो मृगरूपिणी अपनी स्त्री के साथ विहार कर रहा था। बाण लगते ही मुनि ने शाप दिया कि जिस समय तू अपनी स्त्री के साथ होगा तेरी भी इसी तरह मृत्यु हो जायगी। उसके शाप से डरे हुए पाण्डु ने तब से अपनी स्त्री का संग छोड़ दिया )

अपकृष्य=दूर कर।
गुणेतरा:=गुणों से अन्य—दोष।
पृष्ठ-८७—पिष्टपेषणम्=पिसे हुए को पीसना, एक ही बात को बार बार दोहराना।
कैरातम्=व्याध के।
पशुपतिः=महादेव।
फाल्गुनेन=अर्जुन से।
गाम्=पृथ्वी को।
वीर्यगुप्ते=पराक्रम से रक्षित।
पृष्ठ-८८—अनुक्तसन्देशाः=संदेश को बिना कहे।
केकर=विकृताक्ष ( टोरा )
पिङ्गल=वानर की तरह चपल।
मवितुकामः=बांधनेकी इच्छा वाला (मवितुं कामः यस्य,सः)
पृष्ठ-८९—जम्भक=छली।
मत्कार्मुकोदरविनिःसृतबाणजालैः=मेरे धनुष से निकले हुए बाणों के समूह से ( मम कार्मुकम्=मत्कार्मुकम्, तस्मात् विनिःसृताः ये बाणाः, तेषां जालानि, तैः )।
क्षरत्क्षतजरञ्जित-सर्वगात्रम्=बहते हुए लहू से भरे हुए अवयवों वाले ( क्षतात् जायते=क्षतजम् ( रुधिरम् ) तेन रञ्जितानि सर्वाणि गात्राणि यस्य, सः, तम् )।

## १०वें श्लोक के अन्तर्गत कथायें

( बनवास भोगते हुए पांडवों को एक दिन श्रीवेदव्यास के दर्शन हुए। उन्होंने युधिष्ठिर द्वारा अर्जुन को कहलवाया कि यदि वह इन्द्र और महादेवसे दिव्यास्त्र पायेगा तभी कौरवों पर विजय पा सकेगा। अर्जुन ने कैलाश पर जाकर तप किया।

पहले उसे इन्द्र के दर्शन हुए। पर इन्द्र ने महादेव की प्रसन्नता से पहले उसे दिव्यास्त्र देना अस्वीकार किया। अर्जुन ने फिर घोर तप किया। महादेव किरात का वेष धार कर अर्जुन से लड़े और उसकी वीरता से प्रसन्न होकर उसे पाशुपतास्त्र दिया। तत्पश्चात इन्द्र ने उसे दिव्यास्त्र दिये )।

( कृष्ण और अर्जुन की अनुमति से अग्निदेव खांडव बन को जला कर वहां के जीवों को खाना चाहता था। पर इन्द्र वर्षा से अग्नि को शान्त कर उसे विफलमनोरथ कर देता, क्योंकि उस बन में इन्द्र का मित्र तक्षक नाग रहता था। अर्जुन ने अग्नि की सहायता की और तीरों से इन्द्र की दाल न गलने दी )।

( तीन कोटि निवातकवच राक्षस ब्रह्मा से वरदान पाकर बहुत बलवान् हो गये थे। उन से देवताओं के नाक में दम आ गया था। जब अर्जुन ने इन्द्र से अस्त्र ग्रहण किये तो इन्द्र ने उसे गुरुदक्षिणा के रूप में निवातकवचों का बध करने को कहा। अर्जुन ने इन्द्र के अनुरोध से उन सब को मार दिया )।

( जिस समय पांडव राजा विराट के यहां अज्ञातवास कर रहे थे तो उस समय भीष्म, द्रोण, दुर्योधन—आदि महारथी विराट की राजधानी पर चढ़ आये और उसकी साठ हज़ार गौवों को हांक ले गये। यह बात विराट के पुत्र उत्तर को मालूम हुई। उस ने कहा कि किसी योग्य सारथि के बिना मैं नहीं लड़ सकता। द्रौपदी के कहने पर अर्जुन उत्तर का सारथि बन गया और कौरवों को परास्त कर गौवें छुड़ा लाया)।

## १२ वें श्लोक के अन्तर्गत घटना का वृत्त

( किसी समय दुर्योधन ससैन्य घोषयात्रा कर रहा था। रास्ते में उसकी चित्रसेन नामक गंधर्व से मुठभेड़ हो गई। वह उसे उठाकर ले गया। जब इस बात का पता पांडवों को लगा तो युधिष्ठिर ने, भीम के मना करने पर भी, अर्जुन को भेज कर दुर्योधन को गन्धर्वों से छुड़वाया )।

पृष्ठ–६०—प्रातरस्मरणीयत्वात्=प्रातःकाल नाम लेनेके अयोग्य होने से। (लोग प्रातःकाल कृपणोंका नाम लेना अशुभ मानते हैं)

कालान्तरवाणिज्यादिभिः=समय समय पर व्यापार आदि के द्वारा।

वर्तुलीकृतवित्तः=जिस ने धन इकट्ठा किया हुआ था। ( वर्तुलीकृतं वित्तं येन, सः )

अनागतावेक्षाम्=भविष्य की चिन्ता ( न आगतम्=अनागतम्, तस्य अवेक्षा, ताम् )।

परालक्ष्यस्थाने=दूसरों को न मालूम ( गुप्त ) स्थान में।

पृष्ठ–६१—कण्ठगतप्राणैः=जिनके प्राण कंठ तक आ गये हों, मृत्यु को तैयार।

परामृष्टवान=सोचा ( परा + √मृश् + क्तवतु )।

निराकुलः=संताप रहित ( मैं )।

पृष्ठ–६२—विपन्ने=मृत हो जाने पर।

धनपोटलिकम्=धनकी गांठ ( पोटली ) को।

नाविकं धीवरम्=नावसहित मल्लाह को।

दित्सया=देने की इच्छा से।

दाहविशुद्धानि=तपा कर शोधे हुए।

पृष्ठ-९३—दुर्विपाकः=बुरा फल ।

## वनप्रस्थानकाले रामस्य सीताम्प्रत्युपदेशः

पृष्ठ-९४—तत्रभवान्=पूजनीय ।

नाहं कत्थ्यः=मेरी प्रशंसा मत करना ।

पृष्ठ-९५—स्थिरीभव=धैर्य रखो ।

कल्यम्=प्रातःकाल ।

सन्तापकर्षिता=शोक से दुःखित ।

विपर्यये=प्रतिकूलता में ( आज्ञा न मानने में ) ।

औरसान्=अपने सगे पुत्रों को ।

समनुवर्तिनी=आज्ञाकारिणी ।

## सीतायाः प्रत्युत्तरं रामम्प्रति

पृष्ठ-९६—स्वानि कर्माणि भुञ्जानाः=अपने अपने कर्मों का फल भोगते हुए ।

प्रेत्य=मर कर ।

मृद्नन्ती=कुचलती हुई ( √मृद्+शतृ-स्त्री० ) ।

वैहायसगतेन=आकाशयात्रा से ।

पृष्ठ-९७—अचिन्तयन्ती...पतितम्=त्रिलोकी की भी ( तीनोंलोकों के ऐश्वर्य की ) चिन्ता न करती हुई, केवल पतिव्रत धर्म का पालन करती हुई ।

उद्यता=वनं गन्तुमिति शेषः ।

कारण्डव=पानी की मुरगाबी ।

पद्मिनीः=कमलयुक्त सरों को ।

पृष्ठ-९८—मृगायुतम्=( मृगैः आ ( समन्तात् ) युतम् । ) चारों तरफ हरिणों से युक्त ।

अनन्यभावाम्=जिसका भाव (मनोवृत्ति) किसी अन्य (तुम्हारे से अतिरिक्त) में नहीं।

याचनां साधु कुरुष्व=प्रार्थना को पूर्ण करो।

## करगरानाथ-कथा

पृष्ठ–९९—करगरा=(करे गरं यस्याः, सा) जिसके हाथ में विष हो।

यथार्थनाम्नी=अपने नाम के अनुसार कामों वाली।

उद्वेगकारिणी=कष्ट देने वाली।

अटव्यां=जंगल में।

पृष्ठ–१००—मदनभूपतिसनाथाम्=मदन नाम राजा से शासित।

नीरुजा=नीरोग।

मन्त्रवादः=मन्त्रोच्चारण।

व्यन्तरेण=भूत से।

घोषणा दत्ता=मुनादी की।

डिण्डिमः स्पृष्टः=डौंडी को छुआ (यह दिखाने के लिये कि मैं इन शर्तों को मानता हूँ)।

आचार्यविस्तरम्=आचार्य की विस्तृत विधि (यह दिखाने को कि मैं इस बीमारी का आचार्य हूं)।

पितृष्वसा=पिता की बहन (बुआ)।

पृष्ठ–१०१—जीवितशेषा=विना प्राणों के जिस में और कुछ न रह गया हो (जीवितम् एव शेषं यस्याः, सा)।

मया प्रतिज्ञं कृतम्=मैंने जो किया था वह केवल एक विषय (case) के लिये किया था। अर्थात् केवल मृगलोचना को ही छोड़ने का तुझ से प्रण किया था।

कर्णोपान्ते=कानों के पास।

पात्रम्=आवेश के विषय (सुलोचना) को।

## भोजराजस्य सिंहासनोद्धारकथा

पृष्ठ-१०२—कुर्वति=करते हुए (√कृ+शतृ—सप्त० एक०)।

अवपत्=बोया।

पृष्ठ-१०३—ब्रह्मस्वम्=ब्राह्मण का धन।

यावनालकन्दएडान्=जुआर (मक्की) के डंडों को।

उर्वारुकफलानि=ककड़ी (खरबूजा) फलों को।

पृष्ठ-१०४—कियल्लाभः=कितना लाभ।

अवसानम्=अन्त।

पृष्ठ-१०५—पुरुषप्रमाणे=आदमी के आकार जितने गहरे।

## प्रहेलिकाः

पृष्ठ-१०६—द्विजिह्वा=दो जिह्वाओं वाली।

पाञ्चाली=द्रौपदी।

त्रिनेत्रधारी=तीन आँखों वाला।

शूलपाणिः=शिव।

अपदः=पादरहित।

## कूटानि

पृष्ठ-१०७—यदि दास्यसि=(यदि दासी असि) यदि तू दासी (नौकरानी) है।

नो दास्यसि=(नो दासी असि) यदि दासी नहीं है।

हेमरेखाङ्क=सुवर्ण से मढ़े हुए।

मुञ्चति=छोड़ते हुए (√मुच्+शतृ—सप्त० एकव०)।

मध्येरीतिधरम्=मध्य में रीति (पित्तल) से युक्त, अथवा मध्य में 'री' से युक्त 'शर' को—शरीर को।

विषमित्यादि—हे-राजन्, विषम्(ष् से रहित) बिना नाभ्याम्

( पो न् से रहित ), बिना केन ( क् से रहित ), अकण्टकम् ( शत्रुरहित ) ( 'कृष्णाजिनम्' में से यदि ष् , दो न और क् निकाल दें तो पीछे अक्षर रह जायेंगे—ऋ + आ + जि + अ + म् 'ऋ' को 'र्' और 'जि' की 'इ' को 'य्' करने से 'राज्यम् बन जायगा ) राज्यम् ( राज्य को ) भुङ्क्ष्व भोगो ।

## अन्तरालापाः

वीरमर्कटकम्पिता=विः (पक्षी)+रमा (लक्ष्मी)+ऋक् ( ऋचा )+कटकम् ( वलय )+पिता ।

अन्तिम का उत्तर=वीर बानरों से कम्पाई हुई ।

## सूक्तयः

पृष्ठ–१०८—वैनतेयः=गरुड़ ।

पौरुषम्=पुरुषार्थ ।

वयः=उम्र ।

अम्बुना=जल से ।

पिच्छिले=पैर को फिसलानें वाले ।

दर्दुराः=मेंढक ।

पृष्ठ–१०६–क्षतिः=हानि ।

मृग्यते=खोजा जाता है ।

पामरः=मूर्ख ।

निधानम्=धन ।

हेम्नः=सुवर्ण का ।

श्यामिका=खोटापन ।

## अकारादिक्रमेण श्लोकानुक्रमणिका